162 संकप्प कण्णहारो किंकरसच्च भवसाअरे अइगहिरे ।
अणहो तुमं खु पोओ अप्पाण किवा समीरणेण पउत्तो[1] ॥ २४

163 अच्चुअ ण [3]देन्ति मोक्खं ईसर भावेण भाविआ इअर सुरा ।
रत्तिं परिवट्टेउं लक्खं आळेक्ख दिणअराण वि ण खमम् ॥ २५

164 [5]अमअ रस साअरस्स व अहिन्दउर णाह णिम्मल महग्घाइम् ।
तीरन्ति ण विगणेउं अणण्ण सुळहाइ तुज्झ गुण रअणाइम् ॥ २६

165 भूसिअ सुइ सीमन्तो भुअइन्द [7]उरेस सव्वगुण सीमन्तो ।
खविअ तिसा मळ मोहो मुणीण हिअएसु फुरसि सामळ मोहो ॥ २७

166 सुह लक्खण सिरिवच्छो सोहसि णिम्मुत्त विरह खण सिरिवच्छो ।
रण[8]देवण सविहगओ उद्धूण गलुलणइ तीर वण सविह गओ ॥ २८

---

सङ्कल्प कर्णधारः किङ्करसत्य भव सागरेऽतिगभीरे ।
अनघस्त्वं खलु पोतः आत्मनां कृपा समीरणेन [2]प्रयुक्तः ॥ २४

अच्युत न ददति मोक्षम् ईश्वरभावेन भाविता इतर सुराः ।
रात्रिं परिवर्तयितुं लक्षमालेख्य[4]दिनकराणामपि न क्षमम् ॥ २५

अमृत रस सागरस्येव अहीन्द्रपुरनाथ निर्मलमहार्घाणि ।
[6]तीर्यन्ते न विगणयितुम् अनन्य सुलभानि तव गुण रत्नानि ॥ २६

भूषितश्रुति सीमन्तो भुजगेन्द्रपुरेश सर्वगुण सीमान्तः ।
क्षपित तृष्णा मलमोहो मुनीनां हृदयेषु स्फुरसि श्यामळ मयूखः ॥ २७

शुभ लक्षण श्रीवत्सः शोभसे निर्मुक्त विरह क्षण श्रीवत्सः ।
रणदेवन सविहगः[9] [10]उद्धट गरुडनदी तीर वन [11]सविध गतः ॥ २८

[1] पवट्ठो [2] प्रवृत्तः [3] दन्ति [4] दिवसकराणामपि [5] अमिअ [6] शक्नुवन्ति
[7] पुरेस [8] देवन [9] सविधगतः [10] उच्चल [11] सविधगजः

167 [1]अकुमार जोव्वण ठिअं अहिन्दउरणाह अहिमअं अणुरूवम् ।
णिच्चं सहाव सिद्धं सुव्वइ सूरि महिअं [2]सुहं तुह रूवम् ॥ २९

168 तिउणं तस्स विआरा अच्चुअ पुरिसोत्ति आअम गणिज्जन्ता ।
[4]अत्था तुह खु समत्था परम्मि रूपम्मि भूसणत्थ सरूवा ॥ ३०

169 णिन्ति तुमाओ अच्चुअ णिक्खविअ विवक्ख णिट्ठुर परक्कमणा ।
संठविअ परम धम्मा साहु परित्ताण सप्फला ओआरा ॥ ३१

170 हरि मणि सरिच्छ णिअ रुइ हरिआअन्त भुअङ्गन्द वुर पेरन्तो ।
काले दासजणाणं कण्ह घणो होसि दिण्ण[6]कालुण्ण रसो ॥ ३२

171 गलुल णइ कच्छरण्णे लक्खिज्जासि लच्छि महि कणेरु मणहरो ।
दीसन्त बहुळ दाणो दिसा गइन्दो व्व [7]खुडिअ दणुइन्द दुमो ॥ ३३

---

अकुमार यौवन स्थितम् अहीन्द्रपुरनाथाभिमत मनुरूपम् ।
नित्यं स्वभाव सिद्धं श्रूयते सूरिमहितं [3]सुखं तव रूपम् ॥ २९

त्रिगुणं तस्य विकाराः अच्युत पुरुष इत्यागम गण्यमानाः ।
अर्थास्तव खलु समस्ताः परस्मिन् रूपे भूषणास्त्र स्वरूपाः ॥ ३०

[5]निर्यान्ति त्वत्तोऽच्युत निक्षपित विपक्ष निष्ठुर पराक्रमणाः ।
संस्थापित परम धर्माः साधु परित्राण सत्फला अवताराः ॥ ३१

हरि मणि सदृक्ष निज रुचि हरितायमान भुजगेन्द्रपुर पर्यन्तः ।
काले दासजनानां कृष्ण घनो भवसि दत्त कारुण्य रसः ॥ ३२

गरुड नदी कच्छारण्ये लक्ष्यसे लक्ष्मी मही करेणु मनोहरः ।
दृश्यमान बहुळदानो दिशा गजेन्द्र इव [8]खण्डित दनुजेन्द्र द्रुमः ॥ ३३

[1] अउमार [2] हिअ [3] शुभ, हितं [4] अट्ठा [5] गच्छन्ति [6] कारुण्ण [7] तुडिअ [8] त्रुटित

172 मुहचन्द[1]मोळि दिणअर मज्झ ठिओ तुज्झ[2]चिउर भारन्धारो ।
अघडिअ घडणा सत्तिं सच्चं ठावेइ दाससच्च समग्गम् ॥ ३४

173 परिहसिअ पुण्णचन्दं पउम सरिच्छ प्पसण्ण लोअण जुअळम् ।
संकप्पिअ दुरिआइ वि सम्हरिअं हरइ दाससच्च तुह मुहम् ॥ ३५

174 माहप्पं तुह महिअं मङ्गळिअं तुळसि कोत्थुह प्पमुहाणम् ।
अच्चुअ ठिर वणमाळं [3]वच्छं दंसेइ लच्छि लक्खण सुहअम् ॥ ३६

175 णिव्विसइ [5]णिच्चतावो देवअणो देवणाअअ विहि प्पमुहो ।
सीअळ[6]सन्त वहुत्तं छाहिं तुह विउळ बाहु कप्प दुमाणम् ३७

176 संकप्प चन्द खोहिअ तिउणोअहि विउळ बुब्बुअ प्पअरेहिम् ।
बम्हण्डेहि वि भरिअं किङ्करसच्च तुह कीस णु किसं उअरम् ॥ ३८

---

मुखचन्द्र मौलि दिनकर मध्यस्थितस्तव चिकुरभारान्धकारः ।
अघटित घटना शक्तिं सत्यं स्थापयति दाससत्य समग्राम् ॥ ३४

परिहसित पूर्णचन्द्रं पद्म सदृक्ष प्रसन्न लोचन युगळम् ।
संकल्पित दुरितान्यपि संस्मृतं हरति दाससत्य तव मुखम् ॥ ३५

माहात्म्यं तव महितं माङ्गलिकं तुळसी कौस्तुभ प्रमुखानाम् ।
अच्युत स्थिर वनमालं [4]वत्सं दर्शयति लक्ष्मीलक्षण सुभगम् ॥ ३६

निर्विशति [7]नित्यतापो देवजनो देवनायक विधि प्रमुखः ।
शीतल[8]शान्त प्रभूतां छायां तव विपुल बाहु कल्प द्रुमाणाम् ॥ ३७

संकल्प चन्द्र[9]क्षोभितात्रिगुणोदधि विपुलबुद्बुद प्रकरैः ।
ब्रह्माण्डैरपि भरितं किंकरसत्य तव कस्मान्नु कृशमुदरम् ॥ ३८

[1] मउलि [2] चिहुर [3] वक्खो दावेइ [4] वक्षो दापयति [5] णिन्ततावो [6] संद
[7] गच्छत्तापो, निर्यत्तापो [8] सांद्र [9] क्षुब्ध

177 णाहि रुहं तुह णळिणं [1]भुअईसर णअर णाह सोहइ सुहअम् ।
मज्झ ठिअ बम्ह भमरं वच्छासण लच्छि पाअ[2]वीढ सारिच्छम् ॥ ३९

178 दिढ पीडिअ महु कइढव सोणिअ पडल परिपाडलम्बर घडिआ ।
राअइ अच्चुअ मुहला रइणाह गइन्द[5]सिंखळा तुह रसणा ॥ ४०

179 दासाण सच्च दीसइ दाणव वीराण दीह णिद्दा सअणम् ।
तुह उअरट्ठिअ तिहुवण पासाअक्खम्भ सच्छअं ऊरुजुअम् ॥ ४१

180 जाणु मणि दप्पणेण अ जङ्घा मरगअ कळाइआए अ धणिआ ।
अच्चुअ ण मुअइ कन्ती लच्छी व सरोअ लञ्छणे तुह चळणे ॥ ४२

181 सुइ सीमन्त पसूणं सोहइ णअसच्च तुज्झ सव्व सरणम् ।
कमण खण जणिअ सुर णइ पसमिअ तेलोक्क पाअअं पअ पउमम् ॥ ४३

---

[3]नाभिरुहं तव नळिनं भुजगेश्वर नगर नाथ शोभते [4]सुभगम् ।
मध्यस्थित ब्रह्म भ्रमरं वत्सासन लक्ष्मीपाद पीठ सदृक्षम् ॥ ३९

दृढ पीडित मधुकैटभ शोणित पटल परिपाटलाम्बर घटिता ।
[6]राजत्यच्युत मुखरा रतिनाथ गजेन्द्रशृङ्खला तव रशना ॥ ४०

दासानां सत्य दृश्यते दानव वीराणां दीर्घनिद्रा शयनम् ।
तवोदर स्थित त्रिभुवन प्रासाद स्तम्भ सच्छायमूरुयुगम् ॥ ४१

जानु मणि दर्पणेन च जङ्घा मरकत कलाचिकया च धन्या ।
अच्युत न मुञ्चति कान्तिः लक्ष्मीरिव सरोज लाञ्छनौ तव चरणौ ॥ ४२

श्रुति सीमन्त प्रसूनं शोभते नतसत्य तव सर्वशरण्यम् ।
क्रमण क्षण जनित सुरनदी प्रशमित त्रैलोक्य पातकं पदपद्मम् ॥ ४३

[1] भुअएसरण [2] पीड [3] नाभी [4] सुखदम् [5] सिङ्कला [6] राजते

182 इअ तिहुवणेक्कमूळं [1] आसादेन्ति अणहा [2] अमअसाउरसम् ।
ओसहि महिहर पासे उइअं तुं ओसहिं व दास रुआणम् ॥ ४४

183 सिद्धञ्जणं व सामं तुज्झ तणुं णिअ विलोअणेसु खिवन्ता ।
अच्चुअ लच्छि णिवासं णिच्च णिऊढं णिहिं व पेच्छान्ति तुमम् ॥ ४५

184 विहडिअ णिबिडन्धारो घडन्त जोई तिलोअ एक्क गह वई ।
दिट्ठि गओ जाण तुमं [3] णमन्तसच्च ण हु ताण मोह तिआमा ॥ ४६

185 विसअ रसम्मि [5] विरत्ता विआर जणणेहि वि ण हु विकीरन्ता ।
जीवन्त मुक्क सरिसा अच्चुअ दीसन्ति पावणा तुह भत्ता ॥ ४७

186 गन्धव्व णअर सिमिणअ सारिच्छाणं सिरीण वण सरिआणम् ।
ण सुमरइ तुम्ह गहिओ सरणागअ सच्च सइमओ [7] जीअगओ ॥ ४८

---

इति त्रिभुवनैकमूलम् आस्वादयन्त्यनघा अमृतस्वादु रसम् ।
ओषधिमहीधरपार्श्वे उदितं त्वामोषधिमिव दास रुजाम् ॥ ४४

सिद्धाञ्जनमिव श्यामां तव तनुं निजविलोचनेषु क्षिपन्तः ।
अच्युत लक्ष्मीनिवासं नित्यनिगूढं निधिमिव पश्यन्ति त्वाम् ॥ ४५

विघटित निबिडान्धकारो घटमान ज्योतिस्त्रिलोकैक ग्रहपतिः ।
दृष्टिगतो येषां त्वं [4] नमत्सत्य न खलु तेषां मोहत्रियामा ॥ ४६

विषयरसे [6] विरक्ताः विकारजननैरपि न खलु विक्रियमाणाः ।
जीवन्मुक्त सदृशा अच्युत दृश्यन्ते पावनास्तव भक्ताः ॥ ४७

गन्धर्व नगर स्वप्न सदृक्षाणां [8] श्रियां वन सरिताम् ।
न स्मरति त्वद्गृहीतः शरणागत सत्य सदामदो जीव गजः ॥ ४८

[1] आसाएन्ति [2] अमिअ [3] णअसच्च [4] नतसत्य [5] सुवन्ता [6] स्वपन्तः [7] जीवगओ [8] श्रीणां

187 ण महेन्ति णाणवन्ता तरङ्ग डिण्डीर बुब्बुअ सरिच्छाइम् ॥
विहि पमुहाण पआइं घण कन्दळि कन्द कअळि खम्भ समाइम् ॥ ४९

188 पुळइअ स पर सहावा पुरिसा घेत्तूण सामिणो तुह सीळम् ।
णाह णअसच्च सघिणा ण मुअन्ति कहं वि सव्व जण सोहद्दम् ॥ ५०

189 माण मएसा मच्छर डम्भासूआ भआमरिस लोह मुहा ।
दीसन्ति ण मोहसुआ दोसा दासाण सच्च तुह भत्ताणम् ॥ ५१

190 जाण मई इअर मुही काळो सअळो वि ताण कलि वित्थारो ।
जे तुह पअम्मि पवणा णत्थि कली णाअवइ णअर [1] वइ ताणम् ॥ ५२

191 अच्चासण्ण विणासा अच्चुअ पेच्छन्ति तावए भत्तअणे ।
मोक्ख रुईण सुमग्गे मूढा दिअह अर मण्डलम्मि व छिद्दम् ॥ ५३

---

न महयन्ति ज्ञानवन्तः तरङ्ग डिण्डीर बुद्बुद सदृक्षाणि ।
विधि प्रमुखानां पदानि घन कन्दलि कन्द कदली स्तम्भ समानि ॥ ४९

दृष्ट स्व पर स्वभावाः पुरुषा गृहीत्वा स्वामिनस्तव शीलम् ।
नाथ नतसत्य सघृणाः न मुञ्चन्ति कथमपि सर्वजन सौहार्दम् ॥ ५०

मान मदेर्ष्या मत्सर दम्भासूया भयामर्ष लोभ मुखाः ।
दृश्यन्ते न मोहसुताः दोषा दासानां सत्य तव भक्तानाम् ॥ ५१

येषां मतिरितर मुखी कालः सकलोपि तेषां कलि विस्तारः ।
ये तव पदे प्रवणाः नास्ति कलिर्नागपति नगर पते तेषाम् ॥ ५२

अत्यासन्न विनाशाः अच्युत पश्यन्ति तावके भक्तजने ।
मोक्षरुचीनां सुमार्गे मूढा दिवसकर मण्डल इव च्छिद्रम् ॥ ५३

[1] वए

192 [1]णितुडिअ दुम्माण घणा णिम्मल गुण घडिअ तारआ पब्भारा ।
भासन्त भत्ति जोण्हा णअसच्च फुरन्ति णह णिहा तुह भत्ता ॥ ५४

193 ण हु जम विसअम्मि गई णअसच्च पअम्बुअं तुह पवण्णाणम् ।
खलिआण वि जह जोग्गं सिक्खा सुद्धन्त किंकराण व लहुई ॥ ५५

194 कम्म गइदोस[3]दुहिआ कअन्त भिउडी भुअङ्गि दंसण तत्था ।
अच्चन्ति तुज्झ चळणे अच्चुअ पब्भठ्ठ वम्मह रसासाआ ॥ ५६

195 आलग्गइ तुह चळणे अच्चुअ विहिणा वि अच्चणा आअरिआ ।
जा एक्कन्ति पउत्ता सेसं व सअं सिरेण पडि गेण्हसि तम् ॥ ५७

196 तुह मुह जोण्हा दाविअ माणस ससि अन्त पवह संणिह बाहे ।
अच्चुअ ण मुआसि भत्ते कळम्ब गोळ णिह कण्टअन्त णिअङ्गे ॥ ५८

---

[2]निस्त्रुटित दुर्मान घनाः निर्मल गुण घटित तारका प्राग्भारा : ।
भासमान भक्ति ज्योत्स्नाः नतसत्य स्फुरन्ति नभो निभास्तव भक्ताः॥ ५४

न खलु यमविषये गतिर्नतसत्य पदाम्बुजं तव प्रपन्नानाम् ।
स्खलितानामपि यथायोग्यं शिक्षा शुद्धान्त किंकराणामिव लघ्वी ॥ ५५

कर्मगति दोष [4]दुःखिताः कृतान्त भ्रुकुटी भुजङ्गी दर्शन त्रस्ताः ।
[5]अर्चन्ति तव चरणौ अच्युत प्रभ्रष्ट मन्मथ रसास्वादाः ॥ ५६

आलगति तव चरणौ अच्युत विधिना ऽप्यर्चनाऽऽचरिता ।
यैकान्ति प्रयुक्ता शेषामिव स्वयं शिरसा प्रतिगृह्णासि ताम् ॥ ५७

तव मुख ज्योत्स्ना द्रावित मानस शशि कान्त प्रवाह संनिभ बाष्पान् ।
अच्युत न मुञ्चसि भक्तान् कदम्ब गोळ निभ कण्टकायमान निजाङ्गान् ॥ ५८

[1] णिखुडिअ, [2] निस्त्रुटित, निखण्डित [3] महिआ [4] मथिताः [5] अर्चयन्ति

197 सव्वेसु वि णिव्वेरा सरणागअ सच्च गहिअ सासअ धम्मा ।
गअसङ्गा तुह भत्ता जन्ति तुमं एव्व दुळ्ळहं इअरेहिम् ॥ ५९

198 अहिवइ[1]णअरिन्द तुमं आसण्णं वि गअणं व सइ दुग्गेज्झम् ।
विसएसु विलग्गन्ता तूरन्ता वि ण लहन्ति डोळन्त मणा ॥ ६०

199 भत्ता तावअ सेवा रस भरिआ सअल रक्खणोसुअ रुइणा ।
करणाइ धरन्ति चिरं कङ्खिअ मोक्खा वि अच्चुअ तुए ठविआ ॥ ६१

200 ठिरगुण गिरि जणिएहिं संतारेसि णअसच्च णिअ भत्तेहिम् ।
जम्म परिवाडि जलहिं जङ्गम ठिर सेउ दंसणिज्जेहि जणे ॥ ६२

201 पसमिअ भवन्तर भआ पत्तं पत्तं हिअं ति [4]परिपेच्छन्ता ।
भावेन्ति तुज्झ भत्ता पिआइहिं व णअसच्च पच्चिम दिअहम् ॥ ६३

---

सर्वेष्वपि निर्वैराः शरणागतसत्य गृहीतशाश्वत धर्माः ।
गतसङ्गास्तव भक्ताः यान्ति त्वामेव दुर्लभमितरैः ॥ ५९

अहिपति नगरेन्द्र त्वाम् आसन्नमपि गगनमिव सदा [2]दुर्ग्रहम् ।
विषयेषु विलगन्तः त्वरमाणा अपि न लभन्ते डोलायमान मनसः ॥ ६०

भक्तास्तावक सेवा रस भरिताः सकलरक्षणोत्सुक [3]रुचिना ।
करणानि धरन्ति चिरं काङ्क्षितमोक्षा अप्यच्युत त्वया स्थापिताः ॥ ६१

स्थिर गुण गिरि जनितैः सन्तारयसि नतसत्य निजभक्तैः ।
जन्म परिपाटि जलधिं जङ्गम स्थिर सेतु दर्शनीयैर्जनान् ॥ ६२

प्रशमित भवान्तर भयाः प्राप्तं प्राप्तं हितमिति परिपश्यन्तः ।
भावयन्ति तव भक्ताः प्रियातिथिमिव नतसत्य पश्चिम दिवसम् ॥ ६३

[1] णअरेन्द [2] दुग्गाह्यं [3] रुच्या [4] परिपच्छन्ता

202 पअड तिमिरम्मि हुवणे पत्तपडिट्ठाविअ परम णाण पईवा ।
णिज्जन्ति अच्चुअ तुए णिअं पअं सइ सअं पहं कअ कज्जा ॥ ६४

203 दिढ तिव्व भत्ति णअणा परिपेच्छन्ता अहिन्दउरणाह तुमम् ।
पत्ता तुह साउज्जं पन्तिं पूरेन्ति पण्णइन्द मुहाणम् ॥ ६५

204 संणअ सुळहं अच्चुअ समाहि[1]सोवाण कम विळम्ब विमुहिआ ।
सरणं गन्तूण तुमं मुत्ता मुउउन्द खत्तबन्धु प्पमुहा ॥ ६६

205 देवाण पसु समाणो जन्तू गन्तूण देवणाह तुह पअम् ।
तेहिं चिअ सव्वेहिं संसरमाणेहि होइ सइ दिण्ण बली ॥ ६७

206 मोहन्धार महण्णव मुच्छिअ माआ महारअणि पच्चूहो ।
अच्चुअ तुज्झ कडक्खो विमुत्ति पत्थाण पुडम परिअर बन्धो ॥ ६८

---

प्रकट तिमिरे भुवने पात्र प्रतिष्ठापित परम ज्ञान प्रदीपाः ।
नीयन्तेऽच्युत त्वया निजं पदं सदा स्वयं प्रभं कृत कार्याः ॥ ६४

दृढतीव्रभक्तिनयनाः परिपश्यन्तोऽहीन्द्रपुरनाथ त्वाम् ।
प्राप्तास्तव सायुज्यं पङ्क्तिं पूरयन्ति पन्नगेन्द्रमुखानाम् ॥ ६५

सन्नत सुलभमच्युत समाधि सोपान क्रम विलम्ब विमुखिताः ।
शरणं गत्वा त्वां मुक्ता मुचुकुन्द क्षत्रबन्धु प्रमुखाः ॥ ६६

देवानां पशुसमानो जन्तुर्गत्वा देवनाथ तव पदम् ।
तैरेव सर्वैः संसरमाणैः भवति सदा दत्त बलिः ॥ ६७

मोहान्धकार महार्णव मूर्छित माया महारजनि प्रत्यूषः ।
अच्युत तव कटाक्षो विमुक्ति प्रस्थान प्रथम परिकर बन्धः ॥ ६८

[1] सोआण

207 मोक्ख सुह रुक्खमूलं मोह जराउर महारसाअण पवरम् ।
सअल कुसलेक्क खेत्तं किंकरसच्च तुह कित्तणं अमिअ णिहम् ॥ ६९

208 णत्थि अहिक्कम णासो विच्छेअम्मि वि ण पच्चवाअ पसङ्गो ।
सप्पा वि तुह सपज्जा रक्खइ अच्चुअ [1]महत्तरादु भआदो ॥ ७०

209 अपसाए अपसण्णा तुज्झ पसाअम्मि दाससच्च पसण्णा ।
आरज्झा होन्ति परे किं तेहि पसङ्ग लम्भिअ पहावेहिम् ॥ ७१

210 इअर तिअसा पसण्णा किंकरसच्च मह किं णु काहिन्ति हिअम् ।
णीहार घण सएहिं णहु पूरिज्जइ कहं वि चाअअ तिण्हा ॥ ७२

211 अणुगअसुह मिअतिण्हा अच्चुअ वीसमइ तुज्झ मामअ तिण्हा ।
पवहेसु पसरिआए आसिअ पवहन्त घण किवा सरिआए ॥ ७३

---

मोक्ष सुख वृक्ष मूलं मोह जरातुर महारसायन प्रवरम् ।
सकल कुशलैक क्षेत्रं किङ्कर सत्य तव कीर्तनममृत निभम् ॥ ६९

नास्त्यभिक्रम नाशो विच्छेदेऽपि न प्रत्यवाय प्रसङ्गः ।
स्वल्पाऽपि तव सपर्या रक्षत्यच्युत महत्तरात् भयात् ॥ ७०

अप्रसादे अप्रसन्नास्तव प्रसादे दाससत्य प्रसन्नाः ।
आराध्या भवन्ति परे किं तैः प्रसङ्गलम्भित प्रभावैः ॥ ७१

इतर त्रिदशाः प्रसन्नाः किङ्कर सत्य मम किं नु करिष्यन्ति हितम्
नीहार घन शतैः न खलु पूर्यते कथमपि चातक तृष्णा ॥ ७२

अनुगत सुख मृगतृष्णा अच्युत विश्राम्यति तव मामक तृष्णा ।
प्रवाहेषु प्रसृतायाः आश्रित प्रवहद्धन कृपा सरितः ॥ ७३

[1] महत्तराउ

212 विअल सअलङ्ग विसमे धम्मे णअसच्च धअणिहे धारेन्तो ।
कन्तार पन्थओ विअ खळन्त चलणो म्हि काअर [1] विसीरन्तो ॥ ७४

213 ठिर धम्म वम्म थइअं अधम्म पवणाण अग्ग खन्ध[3]पवट्टम् ।
अघडन्त विपडिसारं अच्चुअ मं हससि णूण लच्छि समक्खम् ॥ ७५

214 तरिउं अच्चुअ दुरिअं इमम्मि देहम्मि एक्क दिअहे वि कअम् ।
काळो अळं ण सअळो कलुणाए तुज्झ पुण्ण पत्तं [4] म्हि इमो ॥ ७६

215 अच्चुअ तुज्झ गुणाणं मह दोसाणं वि णत्थि कुत्थ वि गणणा ।
तह वि जओ पुढमाणं अहिअं लीणाण होइ णहु दोब्बळ्ळम् ॥ ७७

216 रत्तिं दिअहं अच्चुअ तुडिअ पडन्ताइ आउ दुम खण्डाइम् ।
दठ्ठूण वि दरिअमणं बालं एण्हिं वि भरसु मं अपमत्तो ॥ ७८

---

विकल सकलाङ्ग विषमान् धर्मान् नतसत्य ध्वजानिभान् धारयन् ।
कान्तार पान्थक इव स्खलच्चरणोऽस्मि कातर [2] विशीर्यमाणः ॥ ७४

स्थिर धर्म वर्म स्थगितम् अधर्मप्रवणानामग्र स्कन्ध प्रवृत्तम् ।
अघटमान विप्रतीसारम् अच्युत मां हससि नूनं लक्ष्मी समक्षम् ॥ ७५

तरितुमच्युत दुरितम् अस्मिन् देह एक दिवसेऽपि कृतम् ।
कालोऽलं न सकलः करुणायास्तव [5] पूर्ण पात्रमस्म्ययम् ॥ ७६

अच्युत तव गुणानां मम दोषाणामपि नास्ति कुत्रापि गणना ।
तथापि जयः प्रथमानां अधिकं लीनानां भवति न खलु दौर्बल्यम् ॥ ७७

रात्रिं दिवसमच्युत [6] त्रुटित पतन्त्यायुर्द्रुम खण्डानि ।
दृष्ट्वापि दृप्त मनसं बालमिदानीमपि भरस्व मामप्रमत्तः ॥ ७८

[1] विईरन्तो [2] विदीर्यमाणः [3] पउत्तम् [4] होमो [5] पूर्णपात्रं भवामः
[6] खंडित पटान्तानि [पतमानानि] पतन्ति । त्रुटितपटायमानान्यायुः

217 णीसास संकणिज्जे देहे पडळन्त सळिल बिन्दु सरिच्छे ।
[1]मुणसि णअसच्च [2]तुमं जरन्त करणे वि दीहजोव्वण तिण्हम् ॥ ७९

218 अमुणिअ णिअ काअव्वं [3]तुळग्ग मुणिएसु मं वि पडिऊळ गइम् ।
इअ णिअ सहाव विळिअं हाउं दासाण सच्च! णहु तुह जुत्तम् ॥ ८०

219 कोहं किं करणिज्जं परिहरणिज्जं वि किंति जाणसि सव्वम् ।
तीरसि अ तं हिअं मह तिअसेसर कुणसु णिअ हिअअ णिक्खित्तम् ॥ ८१

220 एण्हिं उवरिं वि इमो गुण गहिओ दारुपुत्तओ व परवसो ।
तस्स वि मह तिअसेसर तीसु वि करणेसु होसु सुह सङ्कप्पो ॥ ८२

221 णिअ कम्म णिअळ जुअळं अच्चुअ काऊण मह पिअप्पिअ वग्गे ।
काहे घोरकळेवर काराघर कुहर णिग्गअं काहिसि मम् ॥ ८३

---

निश्वास शङ्कनीये देहे पटलान्त सलिल बिन्दु सदृक्षे ।
जानासि नतसत्य त्वं जरत्करणेऽपि दीर्घ यौवन तृष्णाम् ॥ ७९

अज्ञात निज कर्तव्यं [4]यदृच्छया ज्ञातेषु मामपि प्रतिकूल गतिम् ।
इति निज स्वभाव व्रीळितं हातुं दासानां सत्य न खलु तव युक्तम् ॥ ८०

कोऽहं किं करणीयं परिहरणीयमपि किमिति जानासि सर्वम् ।
शक्नोषि च तद्धितं मम त्रिदशेश्वर कुरुष्व निज हृदय निक्षिप्तम् ॥ ८१

इदानीमुपर्यप्ययं गुण गृहीतो दारु पुत्रक इव परवशः ।
तस्यापि मम त्रिदशेश्वर त्रिष्वपि करणेषु भव सुख सङ्कल्पः ॥ ८२

निज कर्म निगळयुगळं अच्युत कृत्वा मम प्रियाप्रिय वर्गे ।
कदा घोर कलेवर कारागृह कुहर निर्गतं करिष्यसि माम् ॥ ८३

[1] जाणसि [2] तुं मं—त्व मां [3] तिळग्ग [4] तिलाग्र

222 हद्दे तुमम्मि कइआ विस्समिअं बम्ह धमणि मग्ग णिहिन्तम् ।
दिणअर दिण्णग्ग करं अच्चुअ दच्छिहिसि दइअ डिम्भं विअ मम् ॥८४

223 काहे अमाणवन्ता अग्गि मुहा आइवाहिआ तुह पुरिसा ।
अइळङ्घेहिन्ति मिमं अच्चुअ तम गहण तिउण मरु कन्तारम् ॥ ८५

224 लङ्घिअ विरआ सरिअं लम्भिअ सइ सुद्ध सत्तमअ सोम्म तणुम् ।
कअ बम्हालंकारं काहिसि णअसच्च किंकरं काहे मम् ॥ ८६

225 संसार साअराओ उक्खित्तं तिअस णाह फुरिआळोअम् ।
काहे काहिसि हिअए कोत्थुह मणि दप्पणं व लच्छि पुळइअम् ॥ ८७

226 काहे तुह पअ पउमे होहिमि णअसच्च केळि कन्त तिहुवणे ।
मअण रिउ मउड मण्डग सुर सरिआ सोत्त सूइअ महु प्पवहे ॥ ८८

---

हार्दे त्वयि कदा विश्रान्तं ब्रह्म धमनि मार्ग [1]गमिष्यन्तम् ।
दिनकर दत्ताग्र करम् अच्युत द्रक्ष्यसि दयित डिम्भमिव माम् ॥ ८४

कदा अमानवान्ताः अग्निमुखा आतिवाहिकास्तव पुरुषाः ।
अतिलङ्घयिष्यन्ति माम् अच्युत तमो गहन त्रिगुण मरु कान्तारम् ॥ ८५

लङ्घित विरजा सरितं लम्भित सदा शुद्ध सत्त्वमय सौम्य तनुम् ।
कृत ब्रह्मालङ्कारं करिष्यासि नतसत्य किङ्करं कदा माम् ॥ ८६

संसार सागराद् उत्क्षिप्तं त्रिदशनाथ स्फुरितालोकम् ।
कदा करिष्यसि हृदये कौस्तुभमणि दर्पणमिव [2]लक्ष्मी पुलकितम् ॥ ८७

कदा तव पादपद्मे भविष्यामि नतसत्य केलि क्रान्त त्रिभुवने ।
मदन रिपु मकुट मण्डन सुर सरित्स्रोतः सूचित मधु प्रवाहे ॥ ८८

[1] निर्यांतं [2] लक्ष्मी दृष्टम्

227 उवणिसआ सिर कुसुमं उत्तंसेऊण तुह पअम्बुअ जुअळम् ।
दइओ होहिमि कइआ दासो दासाण सच्च सूरि सरिच्छो ॥ ८९

228 अउणो णिउत्ति जोग्गं ओआर विहार सहअरत्तण धणिअम् ।
अप्प समभोअ मेत्तं अणुहोहिसि देवणाह काहे णु मिमम् ॥ ९०

229 इअ फुड मणोरहं मं एआरिस वअण मेत्त सारं वसअम् ।
कुणसु णिअ गुण गणेहिं सच्चं दासाण सच्च सइ सच्छन्दो ॥ ९१

230 बाळ पवगोव्व तरळो मारुइ जाइत्ति साअरं तरिउ मणो ।
पत्थेमि तुमं अच्चुअ कङ्खिअ पअ पउम खमसु मह कावेअम् ॥ ९२

231 अच्चुअ विसअक्कन्तं भवण्णवा वत्त भमि[1]णिथुड्डिज्जन्तम् ।
जणणी थणंधअं विअ मं उद्धरिऊण सेवसु सअं पच्छम् ॥ ९३

---

उपनिषच्छिरः कुसुमम् उत्तंसयित्वा तव पदाम्बुज युगळम् ।
दयितो भविष्यामि कदा दासो दासानां सत्य सूरिसदृक्षः ॥ ८९

अपुनर्निवृत्ति योग्यम् अवतार विहार सहचरत्व धन्यम् ।
आत्म सम भोगमात्रम् अनुभविष्यसि देवनाथ कदा नु माम् ॥ ९०

इति स्फुट मनोरथं मां एतादृश वचन मात्र सारं वशगम् ।
कुरुष्व निज गुण गणैः सत्यं दासानां सत्य सदा स्वच्छन्दः ॥ ९१

बाल प्लवग इव तरळो मारुति जातिरिति सागरं तरितुमनाः ।
प्रार्थये त्वामच्युत काङ्क्षित पदपद्म क्षमस्व मम कापेयम् ॥ ९२

अच्युत विषयाक्रान्तं भवार्णवावर्त भ्रामि [2] निमज्ज्यमानम् ।
जननी स्तनंधयमिव मामुद्धृत्य सेवस्व स्वयं पथ्यम् ॥ ९३

[1] णिबुड्डिज्जन्तम्  [2] निमज्जन्तम्

232 कम्म मअ घम्म तविअं सुह मिअ तिण्हाहि काहि वि अतिण्णाहम् ।
कारेसु णिव्वुअं मं करआ सिसिरेहि अच्चुअ कडक्खेहिम् ॥ ९४

233 तुह चिन्तण विमुहाणं दिट्ठि विसाणं व [1]दंसणाउ मोएन्तो ।
अमिअ मुहाणं विअ मं अच्चुअ भत्ताण णेसु णअणासारम् ॥ ९५

234 विस मिळिअ महु णिहेसु अ तिण पडिमेसु अ पडिग्गहेसु पळुठिअम् ।
अमिअ णिहिम्मि व अच्चुअ ठावेसु तुमम्मि णिम्ममं मह हिअअम् ॥९६

235 णिच्चं इमम्मि किवणे णिक्खिवसु णमन्त सच्च णिहि सारिच्छे ।
पवहन्त णह पहाझर पसमिअ पणमन्त संजरे तुह चळणे ॥ ९७

236 सरणागओत्ति जणिए जणवाए वि जइ अच्चुअ ण रक्खसि मम् ।
होज्ज खु साअर घोसो साअर पुळिणम्मि तारिसं तुह वअणम् ॥ ९८

---

कर्म मय घर्म तप्तं सुख मृग तृष्णाभिः कदाऽप्यतृष्णाकम् ।
कारय निर्वृतं मां करका शिशिरैरच्युत कटाक्षैः ॥ ९४

तव चिन्तन विमुखानां दृष्टि विषाणामिव दर्शनान्मोचयन् ।
अमृत मुखानामिव मां अच्युत भक्तानां नयस्व नयनासारम् ॥ ९५

विषमिलितमधुनिभेषु च तृण प्रतिमेषु च प्रतिग्रहेषु प्रलुठितम् ।
अमृत निधाविवाच्युत स्थापय त्वयि निर्ममं मम हृदयम् ॥ ९६

नित्यमस्मिन् कृपणे निक्षिप नमत्सत्य निधि सदृक्षौ ।
प्रवहन्नख प्रभा झर प्रशमित प्रणमत्संज्वरौ तव चरणौ ॥ ९७

शरणागत इति जनिते जनवादेऽपि यद्यच्युत न रक्षसि माम् ।
भवेत् खलु सागर घोषः सागर पुलिने तादृशं तव वचनम् ॥ ९८

[1] दंसणा दु मुअन्तो—मुञ्चन्

237 णिक्खित्तो म्हि अ अगई णिवुणेहि तुमम्मि णाह कारुणिएहिम् ।
ते तुह दठ्ठूण पिए [1]भरिअं णअसच्च भरसु अप्पाण भरम् ॥ ९९

238 णअसच्च पक्कणाणिअ गळिअ चिलाअ भम णिअ कुमारं व णिवो ।
होज्जन्त जोव्वण वहुं वरोव्व मं लहसु मन्ति अण विण्णाविअम् ॥ १००

239 इअ कइ तक्किअ केसरि वेअन्ताअरिअ वेङ्कडेस विरइअम् ।
सुहअं अच्चुअ सअअं सहिअअ हिअएसु सोहउ समग्गगुणम् ॥ १०१

---

निक्षिप्तोऽस्मि चागतिः निपुणैस्त्वयि नाथ कारुणिकैः ।
तांस्तव दृष्ट्वा प्रियान् [2]भृतं नतसत्य भरस्वात्मनो भरम् ॥ ९९

नतसत्य पक्कणानीत गलित किरात भ्रम निज कुमारमिव नृपः ।
भविष्यद्यौवन वधूं वर इव मां लभस्व मन्त्रिजन विज्ञापितम् ॥ १००

इति कविताार्किक केसरि वेदान्ताचार्य वेङ्कटेश विराचितम् ।
[3]सुभगमच्युतशतकं सहृदयहृदयेषु शोभतां समग्रगुणम् ॥ १०१



कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥



[1] निहुअं [2] निभृतम् [3] शुभदं; सुखदं

श्रीः

# रघुवीरगद्यम्

## श्री महावीर वैभवम्



श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥



240 जयत्याश्रित संत्रास ध्वान्त विध्वंसनोदयः ।
प्रभावान् सीतया देव्या परम-व्योम भास्करः ॥

241 जय जय महावीर !

242 महाधीर धौरेय !

243 [1]देवासुर समर समय समुदित निखिल निर्जर निर्धारित निरवधिक माहात्म्य !

244 दशवदन दमित दैवत परिषदभ्यर्थित दाशरथि-भाव !

245 दिनकर कुल कमल दिवाकर !

246 दिविषदधिपति रण सहचरण चतुर दशरथ चरम-ऋण विमोचन !

247 कोसल-सुता कुमार-भाव कञ्चुकित कारणाकार !

248 कौमार केलि गोपायित कौशिकाध्वर !

249 रणाध्वर धुर्य भव्य दिव्यास्त्र बृन्द वन्दित !

250 प्रणत जन विमत विमथन दुर्ललित[2]दोर्ललित !

[1] देव, महासमर [2] दोर्लंलित तद्

262 निषाद राज सौहृद सूचित सौशील्य सागर !

263 भरद्वाज शासन[1]परिगृहीत विचित्र चित्रकूट गिरि कटक तट रम्यावसथ !

264 अनन्य शासनीय !

265 प्रणत भरत मकुट[2]तट सुघटित पादुकाग्र्याभिषेक निर्वर्तित सर्वलोक योगक्षेम !

266 पिशित रुचि विहित दुरित वल-मथन तनय बलिभुगनुगति सरभस-शयन तृण शकल परिपतन भय चकित सकल सुर[3]मुनि-वर-बहुमत महास्त्र सामर्थ्य !

267 द्रुहिण हर वल-मथन[4]दुरालक्ष्य शर लक्ष्य !

268 दण्डका तपोवन जङ्गम पारिजात !

269 विराध हरिण शार्दूल !

270 विलुळित बहुफल मख कलम रजनि-चर मृग मृगयारम्भ संभृत-चीरभृदनुरोध !

271 त्रिशिरः शिरस्त्रितय तिमिर निरास वासर-कर !

272 दूषण जलनिधि शोषण तोषित ऋषि-गण घोषित विजय घोषण !

273 खरतर खर तरु खण्डन चण्ड पवन !

274 द्विसप्त रक्षः-सहस्र नळ-वन विलोलन महा-कलभ !

[1] परिगृहीत चित्रकूट [2] तटघटित [3] मुनिबहुमत [4] दुरारक्ष शरलक्ष

275 असहाय शूर !

276 अनपाय साहस !

277 महित महा-मृथ दर्शन मुदित मैथिली दृढ-तरपरिरम्भण [1]विभव विरोपित विकट वीरव्रण !

278 मारीच माया मृग चर्म परिकर्मित निर्भर दर्भास्तरण !

279 विक्रम यशो लाभ विक्रीत जीवित गृध्र-राज देह दिधक्षा लक्षित भक्त-जन दाक्षिण्य !

280 कल्पित विबुध-भाव कबन्धाभिनन्दित !

281 अवन्ध्य महिम मुनिजन भजन मुषित हृदय कलुष शबरी मोक्ष साक्षिभूत !

किष्किन्धा काण्डम्

282 प्रभञ्जन-तनय भावुक भाषित रञ्जित हृदय !

283 तरणि-सुत शरणागति[2]परतन्त्रीकृत स्वातन्त्र्य !

284 दृढ घटित कैलास कोटि विकट दुन्दुभि कङ्काल कूट दूर विक्षेप दक्ष दक्षिणेतर पादाङ्गुष्ठ दर चलन विश्वस्त सुहृदाशय !

285 अतिपृथुल बहु विटपि गिरि धरणि विवर युगपदुदय विवृत चित्र पुङ्ख वैचित्र्य !

286 विपुल भुज शैल मूल निबिड निपीडित रावण रणरणक जनक चतुरुदधि विहरण चतुर कपि-कुल पति हृदय विशाल शिलातल दारण दारुण शिलीमुख !

[1] विभ्रम [2] परतन्त्रित

सुन्दर काण्डम्

287 अपार पारावार परिखा परिवृत[1]परपुर परिसृत दव दहन जवन पवन-भव कपिवर परिष्वङ्ग भावित सर्वस्व दान !

युद्ध काण्डम्

288 [2]अहित सहोदर रक्षः परिग्रह विसंवादि[3]विविध सचिव विप्रलम्भ समय संरम्भ समुज्जृम्भित सर्वेश्वर भाव !

289 सकृत्प्रपन्न जन संरक्षण दीक्षित !

290 वीर !

291 सत्यव्रत !

292 प्रतिशयन भूमिका भूषित पयोधि पुलिन !

293 प्रलय शिखि परुष विशिख शिखा शोषिताकूपार वारि पूर !

294 प्रबल रिपु कलह कुतुक चटुल कपि-कुल कर-तल तुलित हृत गिरि-निकर साधित सेतु-पथ सीमा सीमन्तित समुद्र !

295 द्रुत गति तरु मृग वरूथिनी निरुद्ध लङ्कावरोध वेपथु लास्य लीलोपदेश देशिक धनुर्ज्याघोष !

296 गगन-चर कनक-गिरि गरिम-धर निगम-मय[4]निज गरुड गरुद्-निल लव गलित विष-वदन शर कदन !

297 अकृत चर वनचर रण करण [5]वैलक्ष्य कूणिताक्ष बहुविध रक्षो बलाध्यक्ष वक्षः कवाट पाटन पटिम साटोप [6]कोपावलेप !

[1] परपुरदवदहन [2] विमत [3] सचिव जन विस्रम्भण समय सम्भ्रम विजृंभित, सचिव विस्रंभण समय संरम्भ समुज्जृंभित [4] निजरथ गरुड [5] वैलक्ष्यशोणिताक्षविरूपाक्षबहुविधरक्षो [6] कोपावलेप कटुरटद्

298 कटुरटद् अठनि टङ्कृति चटुल कठोर[1]कार्मुक !

299 [2]विशङ्कट विशिख विताडन विघटित मकुट विह्वल विश्रवस्तनय विश्रम समय विश्राणन विख्यात विक्रम !

300 कुम्भकर्ण कुल गिरि विदलन दम्भोलि भूत निःशङ्क कङ्कपत्र !

301 अभिचरण हुतवह परिचरण विघटन सरभस परिपतद् अपरिमित कपिबल जलधि लहरि कलकल-रव कुपित मघव-जिदभिहनन-कृदनुज साक्षिक राक्षस द्वन्द्व-युद्ध !

302 अप्रतिद्वन्द्व पौरुष !

303 त्र्यम्बक समधिक घोरास्त्राडम्बर !

304 सारथि हृत रथ सत्रप शात्रव सत्यापित प्रताप !

305 शितशर कृतलवन दशमुख मुख दशक निपतन[3]पुनरुदय दरगलित जनित दर तरल हरि-हय नयन नलिन-वन रुचि-खचित खतल निपतित सुर-तरु कुसुम वितति सुरभित रथ पथ !

306 अखिल जगदधिक भुज बल वर बल दश-लपन लपन दशक लवन जनित कदन परवश[4]रजनि-चर युवति विलपन वचन समविषय निगम शिखर निकर[5]मुखर मुख मुनि-वर परिपणित !

307 अभिगत शतमख हुतवह पितृपति निर्ऋति वरुण पवन धनद-गिरिश[6]प्रमुख सुरपति नुति मुदित !

308 अमित मति विधि विदित कथित निज विभव जलधि पृषत लव[7] !

[1] कार्मुक विनिर्गत विशङ्कट [2] विनिर्गत विशिख [3] पुनरुदयनिपतन
[4] रजनिचरपति [5]मुखरमुखसुरमुनि [6] गिरिशमुख [7] अविदितरहित' इत्यधिकः पाठः ।

309 विगत भय[1]विबुध विबोधित वीर शयन शायित वानर पृतनौघ !

310 स्व समय विघटित[2]सुघटित सहृदय सद्धर्मचारिणीक !

311 विभीषण वशंवदी-कृत लङ्कैश्वर्य !

312 निष्पन्न कृत्य !

313 ख पुष्पित रिपु पक्ष !

314 पुष्पक रभस गति गोष्पदी-कृत गगनार्णव !

315 प्रतिज्ञार्णव[3]तरण कृत क्षण भरत मनोरथ संहित सिंहासनाधिरूढ !

316 स्वामिन् !

317 राघव सिंह !

उत्तर काण्डम्

318 [4]हाटक गिरि कटक लडह पाद पीठ निकट तट परिलुठित निखिल-नृपति किरीट कोटि विविध मणि गण किरण निकर नीराजित-चरण राजीव !

319 [5]दिव्य भौमायोध्याधिदैवत !

320 पितृ वध कुपित परशु-धर मुनि विहित नृप हनन कदन पूर्वकाल-[6]प्रभव शत गुण प्रतिष्ठापित धार्मिक राज वंश !

321 [7]शुभ चरित रत भरत खर्वित गर्व गन्धर्व यूथ गीत विजय गाथा-शत !

322 शासित मधु-सुत शत्रुघ्न सेवित !

[1] विबुधपरिबृढ, विबुधपति [2] सुघटितहृदय [3] कृतरक्षणभरतमनोरथ, सिंहासना
[4] गिरिकटकपटिमपाटनलडह [5] दिव्यभूमायोध्याधिदेवते [6] कालशतगुण [7] शुभरतभरत

323 [1]कुश लव परिगृहीत कुल गाथा विशेष !

324 [2]विधि वश परिणमदमर भणिति कविवर रचित निज चरित निबन्धन निशमन निर्वृत !

325 सर्व जन सम्मानित !

326 [3]पुनरुपस्थापित विमान वर विश्राणन प्रीणित वैश्रवण विश्रावित यशः प्रपञ्च !

327 पञ्चतापन्न मुनिकुमार सञ्जीवनामृत !

328 त्रेतायुग प्रवर्तित कार्तयुग वृत्तान्त !

329 अविकल बहु[4]सुवर्ण हय-मख सहस्र निर्वहण निर्वर्तित निज वर्णाश्रम धर्म !

330 सर्व कर्म समाराध्य !

313 सनातन धर्म !

332 [5]साकेत जनपद जनि धनिक जङ्गम तदितर जन्तु जात दिव्य गति दान दर्शित नित्य निस्सीम वैभव !

333 भव तपन तापित भक्तजन भद्राराम !

334 श्री रामभद्र !

335 नमस्ते पुनस्ते नमः ॥

[1] कुशल कुशलव, परिगृहीत कुशीलवार्हगाथाविशेष [2] कुशलव परिगृहीत कुशलवार्हगाथाविशेषविधिवश. .निर्वृत सर्वजनसम्मानित [3] पुनस्समुपस्थापित [4] सुवर्णक [5] साकेत जनवरधनिक, साकेतजनपदवरजनिवरधन्यजङ्गम

336 चतुर्मुखेश्वरमुखैः पुत्र पौत्रादि शालिने ।
नमः सीता समेताय रामाय गृहमेधिने ॥

337 कविकथक सिंहकथितं
कठोर सुकुमार गुम्भ गम्भीरम् ।
भव भय भेषजमेतत्
पठत महावीर वैभवं सुधियः ॥



कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥



श्रीः

# गोपाल विंशतिः



श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥



338 वन्दे [1] बृन्दावन चरं वल्लवी जन वल्लभम् ।
जयन्ती संभवं धाम वैजयन्ती विभूषणम् ॥ १

339 वाचं निजाङ्क रसिकां प्रसमीक्षमाणो
वक्त्रारविन्द विनिवेशित पाञ्चजन्यः ।
[2] वर्ण त्रिकोण रुचिरे वर पुण्डरीके
बद्धासनो जयति वल्लव चक्रवर्ती ॥ २

340 [3] आम्नाय गन्धि रुदित स्फुरिताधरोष्ठम्
आस्राविलेक्षणमनुक्षण मन्दहासम् ।
गोपाल डिम्भ वपुषं कुहना जनन्याः
प्राण स्तनन्धयमवैमि परं पुमांसम् ॥ ३

341 आविर्भवत्वनिभृताभरणं पुरस्तात्
आकुञ्चितैक चरणं निभृतान्य पादम् ।
दध्ना निमन्थ मुखरेण निबद्ध तालं
नाथस्य नन्द भवने नवनीत नाट्यम् ॥ ४

[1] वृन्दावन [2] वर्णत्रिकेण [3] आम्नायगन्धरुचिरस्फुरिता........

342 हर्तुं कुम्भे विनिहित करः स्वादु हैयङ्गवीनं
दृष्ट्वा दाम ग्रहण चटुलां मातरं जात रोषाम् ।
पायादीषत्प्रचलित पदो नापगच्छन् न तिष्ठन्
मिथ्यागोपः सपदि नयने मीलयन् विश्व गोप्ता ॥ ५

343 व्रज योषिदपाङ्ग[1]वेधनीयं
मधुराभाग्यमनन्य भोग्यमीडे ।
वसुदेव वधू स्तनन्धयं तत्
किमपि ब्रह्म किशोर भाव दृश्यम् ॥ ६

344 परिवर्तित कन्धरं भयेन
स्मित फुल्लाधर पल्लवं स्मरामि ।
विटपित्व निरासकं कयोश्चित्
विपुलोलूखल कर्षकं कुमारम् ॥ ७

345 निकटेषु निशामयामि नित्यं
निगमान्तैरधुनाऽपि मृग्यमाणम् ।
यमलार्जुन दृष्ट बाल केलिं
यमुना साक्षिक यौवनं युवानम् ॥ ८

346 पदवीमदवीयसीं विमुक्तेः
अटवीसंपदमम्बुवाहयन्तीम् ।
अरुणाधर साभिलाष वंशां
करुणां कारण मानुषीं भजामि ॥ ९

[1] वेदनीयं

347 अनिमेष निषेवणीयमक्ष्णोः
अजहद्यौवनमाविरस्तु चित्ते ।
कलहायित कुन्तलं कलापैः
करणोन्मादक विभ्रमं महो मे ॥ १०

348 अनुयायि मनोज्ञ वंश नालैः
अवतु स्पर्शित वल्लवीविमोहैः ।
अनघ स्मित शीतलैरसौ माम्
अनुकम्पा रतिसङ्कुलैरपाङ्गैः ॥ ११

349 अधराहित चारु वंश नालाः
मकुटालम्बि मयूर पिञ्छ मालाः ।
हरिनील शिला विभङ्ग नीलाः
प्रतिभाः सन्तु ममान्तिम प्रयाणे ॥ १२

350 अखिलानवलोकयामि कालान्
महिलाधीन भुजान्तरस्य यूनः ।
अभिलाष पदं व्रजाङ्गनानाम्
अभिलापक्रम दूरमाभिरूप्यम् ॥ १३

351 हृदि मुग्ध शिखण्ड मण्डनो
लिखितः केन ममैष शिल्पिना ।
मदनातुर वल्लवाङ्गना-
वदनाम्भोज दिवाकरो युवा ॥ १४

352 महसे महिताय मौलिना
विनतेनाञ्जलिमञ्जन त्विषे ।
कलयामि विमुग्ध वल्लवी-
वलयाभाषित मञ्जु वेणवे ॥ १५

353 जयति ललित वृत्तिं शिक्षितो वल्लवीनां
शिथिल वलय शिञ्जा शीतलै र्हस्त तालैः ।
अखिल भुवन रक्षा गोप वेषस्य विष्णोः
अधर मणिसुधायामंशवान् वंशनालः ॥ १६

354 चित्राकल्पः श्रवसि कलयन् लाङ्गली कर्णपूरं
बर्होत्तंस स्फुरित चिकुरो बन्धुजीवं दधानः ।
गुञ्जा बद्धामुरसि ललितां धारयन् हार यष्टिं
गोप स्त्रीणां जयति कितवः कोऽपि कौमार हारी ॥ १७

355 लीलायष्टिं कर किसलये दक्षिणे न्यस्य धन्याम्
अंसे देव्याः पुलकरुचिरे सन्निविष्टान्य बाहुः ।
मेघ श्यामो जयति ललितो मेखला दत्त वेणुः
गुञ्जापीड स्फुरित चिकुरो गोपकन्या भुजङ्गः ॥ १८

356 प्रत्यालीढ स्थितिमधिगतां प्राप्त गाढाङ्कपालिं
पश्चादीषन्मिलित नयनां प्रेयसीं प्रेक्षमाणः ।
भस्त्रा यन्त्र प्रणिहित करो भक्त जीवातुरव्यात्
वारि क्रीडा निबिड वसनो वल्लवी वल्लभो नः ॥ १९

357 वासो हृत्वा दिनकर सुतासन्निधौ वल्लवीनां
लीलास्मेरो जयति ललितामास्थितः कुन्द शाखाम् ।
सव्रीडाभिस्तदनु वसने ताभिरभ्यर्थ्यमाने
कामी कश्चित् कर कमलयोरञ्जलिं याचमानः ॥ २०

358 इत्यनन्य मनसा विनिर्मितां
वेङ्कटेश कविना स्तुतिं पठन् ।
दिव्य वेणु रसिकं समीक्षते
दैवतं किमपि यौवत प्रियम् ॥ २१



कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥



श्रीः

# देहलीश स्तुतिः

—०⁂०—

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

—x—

359

विक्रम्य येन विजितानि जगन्ति भूम्ना
विश्वस्य यं परम कारणमामनन्ति ।
विश्राणयन् प्रणयिनां विविधान् पुमर्थान्
गोप्ता स मे भवतु गोपपुराधिराजः ॥ १

360

देहल्यधीश्वर तवेदृशमीश्वरत्वं
[1]तुष्टूषतां दिशति गद्गदिकानुबन्धम् ।
[2]वाचालयस्यथ च मां क्वचन क्षपायां
क्षान्तेन दान्त कवि मुख्य विमर्दनेन ॥ २

361

त्वच्चक्रवद् द्रुतमनेहसि घूर्णमाने
निम्नोन्नत क्रम निदर्शित नेमि वृत्ताः ।
आराध्य गोप नगरे कृपयोदितं त्वां
स्वाराज्यमग्र्यमलभन्त सुरासुरेन्द्राः ॥ ३

362

आकल्प पुष्प सुभगोन्नत बाहु शाखः
पादे सदा परिपचेल्मि सत्फलस्त्वम् ।
पण्णा तट स्पृशि मृकण्डु तपोवनेऽस्मिन्
[3]छाया निलीन भुवनोऽसि तमाल शाखी ॥ ४

[1] तुष्टूषतो [2] वाचालयत्यथ [3] छायावलीनसुभगोऽसि

363 चक्रस्य दैत्य दनुजादिषु वाम भावं
 शङ्खस्य चाश्रित[1]जनेष्वपि दक्षिणत्वम् ।
व्यक्तं प्रदर्शयसि गोपपुराधिराज
 व्यत्यस्य नूनमनयोः कर संप्रयोगम् ॥ ५

364 दीपेन [2]केनचिदशीत रुचा निशीथे
 स्नेहोपपन्न परिशुद्ध गुणार्पितेन ।
[3]दह्रावकाश निबिडं ददृशुर्भवन्तं
 स्वाध्याय योग नयनाः शुचयः कवीन्द्राः ॥ ६

365 कासार पूर्व कवि मुख्य विमर्दजन्मा
 पण्णा तटेक्षु सुभगस्य रसो बहुस्ते ।
त्वत्पाद पद्म मधुनि त्वदनन्य भोग्ये
 नूनं समाश्रयति नूतन शर्करात्वम् ॥ ७

366 वैरोचनेः सदसि वामन भूमिकावान्
 त्रिक्रान्ति ताण्डव रसेन विजृम्भमाणः ।
चक्रे भवान् मकर कुण्डल कर्णपाशः
 श्यामैक मेघ भरितामिव सप्त लोकीम् ॥ ८

367 चित्रं न तत् त्रिषु मितानि पदेषु धत्ते
 विश्वान्यमूनि भुवनानि विशङ्कटेषु ।
भक्तैः समं क्वचिदसौ भवनैकदेशे
 माति स्म मूर्तिरमिता तदिहाद्भुतं नः ॥ ९

[1] जनेषु च [2] केन हृदि दीप्तरुचा निशीथे [3] दभ्रावकाश

368 भक्तप्रिय त्वयि तथा परिवर्धमाने
मुक्ता वितान विततिस्तव पूर्वमासीत् ।
हारावलिः परमथो रशना कलापः
तारागणस्तदनु मौक्तिक नूपुर श्रीः ॥ १०

369 भिक्षोचितं प्रकटयन् प्रथमाश्रमं [1] त्वं
कृष्णाजिनं यवनिकां कृतवान् प्रियायाः ।
व्यक्ताकृतेस्तव समीक्ष्य भुजान्तरे तां
त्वामेव गोप नगरीश जना [2] विदुस्त्वाम् ॥ ११

370 सत्कुर्वतां तव पदं चतुराननत्वं
पादोदकं च शिरसा वहतां शिवत्वम् ।
एकत्र विक्रमण कर्मणि तद् द्वयं ते
देहल्यधीश युगपत् प्रथितं पृथिव्याम् ॥ १२

371 भक्तोपरोधसह पाद सरोजतस्ते
मन्दाकिनी विगलिता मकरन्द धारा ।
सद्यस्त्रिवर्गम् अपवर्गमपि क्षरन्ती
पुण्या बभूव पुर शासन मौलिमाला ॥ १३

372 विक्रान्ति केतु पटिका पद वाहिनी ते
न्यञ्चन्त्युपैति नत जीवित शिंशुमारम् ।
औत्तानपादि ममृतांशु मशीत भानुं
हेमाचलं पशुपतिं हिमवन्त मुर्वीम् ॥ १४

[1] प्रथमाश्रमत्वं [2] विदुस्ते

10

373 वेधः कमण्डलु जलैर्विहितार्चनं ते
पादाम्बुजं प्रतिदिनं प्रतिपद्यमाना ।
स्तोत्रप्रिय त्रिपथगादि सरिद्वराणां
पण्णा बभूव भुवने बहुमान पात्रम् । १५

374 स्वच्छन्द विक्रम समु[illegible]त्
स्रोतस्त्रयं यदभवत् तव पाद पद्मात् ।
वेताल भूत सरसामपदिश्य वाचं
प्रायेण तत् प्रसव भूमिमवाप भूयः ॥ १६

375 क्रीडापरेण भवता विहितोपरोधान्
आराधकाननुपरोधमुदञ्चयिष्यन् ।
[1]ताम्रेण पाद नखरेण तदाऽण्डमध्ये
घण्टापथं कमपि नूनमवर्तयस्त्वम् ॥ १७

376 [2]कामाविलेऽपि करुणार्णव बिन्दुरेकः
क्षिप्तः स्वकेलि तरसा तव देहलीश ।
[3]तत्सन्ततेरुभयथा विततिं [4]भजन्त्याः
संसार दाव दहनं शमयत्यशेषम् ॥ १८

377 नीडोदरान्निपतितस्य शुकार्भकस्य
त्राणेन नाथ विहरन्निव सार्वभौमः ।
आदाय गोप नगराधिपते स्वयं मां
क्रीडा दया व्यतिकरेण कृतार्थय [5]त्वम् ॥ १९

[1] तारेण [2] कामावलोपिकरुणा [3] त्वत्सन्ततेरु [4] भजन् नः [5] स्वम्

378 लीला शकुन्तमिव मां स्वपदोपलब्ध्यै
स्वैरं क्षिपन् दुरित पञ्जरतो गुणस्थम् ।
तत्तादृशं कमपि गोप पुरी विहारिन्
सन्तोषमुल्ललय सागर संभवायाः ॥ २०

379 वातूल कल्प वृजिन प्रभवै र्मदीयां
वैयाकुलीं विषय सिन्धु तरङ्ग भङ्गैः ।
[1]दासोपमर्द सह दुर्निरसां त्वदन्यैः
अन्वीक्ष्य गाढमनुकम्पितुमर्हसि त्वम् ॥ २१

380 एनस्विनीमिति सदा मयि जायमानां
देहल्यधीश दृषदोऽपि विलापयन्तीम् ।
नाथे समग्र शकने त्वयि जागरूके
किं ते सहेत करुणा करुणामवस्थाम् ॥ २२

381 आत्मोन्नतिं परनिकर्षमपीह वाञ्छन्
[2]निम्नेऽपि मोहजलधौ निपतामि भूयः ।
तन्मामुदश्चय तवोन्नत[3]पाद निघ्नं
देहल्यधीश गुणितेन दया गुणेन ॥ २३

382 अक्षीण कल्मष रसोऽपि तवानृशंस्यात्
लक्ष्मी समक्षमपि विज्ञपयाम्यभीतः ।
भक्तोपमर्दरसिक स्वयमल्प बुद्धेः
यन्मन्यसे मम हितं [4]तदुपाददीथाः ॥ २४

[1] भक्तोपमर्दसह [2] निम्ने विमोह [3] पाददघ्नं [4] तदुपानयेथाः तदुपादधीथाः

383 मन्ये दयार्द्र हृदयेन महा धनं मे
[1]दत्तं त्वयेदमनपायमकिञ्चनत्वम् ।
येन स्तनन्धयामिव स्वहितानभिज्ञं
न्यासीकरोषि निज पाद सरोरुहे माम् ॥ २५

384 दुर्वार तीव्र दुरित प्रतिवावदूकैः
औदार्यवाद्भिरनघ स्मित दर्शनीयैः ।
देहल्यधीश्वर दया भरितैरपाङ्गैः
वाचं विनापि वदसीव मयि प्रसादम् ॥ २६

385 अयमनवम सूक्तैरादिभक्तैर्यथावत्
विशदित निज तत्त्वो विश्वमव्यादभव्यात् ।
रथ चरण निरूढ व्यञ्जनानां जनानां
दुरित मथन लीला दोहली देहलीशः ॥ २७

386 इयमवितथ वर्णा वर्णनीय स्वभावात्
विदित निगम सीम्ना वेङ्कटेशेन गीता ।
भव मरु भुवि तृष्णा[2]लोभ पर्याकुलानां
दिशतु फलमभीष्टं देहलीश स्तुतिर्नः ॥ २८

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥



[1] व्यक्तं त्वयैतदनपाय [2] लोल

श्रीः

# वरदराज पञ्चाशत्



श्रीमान् वेङ्कटनाथार्य. कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥



387 द्विरद शिखरि सीम्ना सद्मवान् पद्म योनेः
तुरग सवन वेद्यां श्यामलो हव्यवाहः ।
कलश जलधि कन्या वल्लरी कल्पशाखी
कलयतु कुशलं नः कोऽपि कारुण्य राशिः ॥ १

388 यस्यानुभावमधिगन्तुमशक्नुवन्तो
मुह्यन्त्यभङ्गुरधियो मुनि सार्वभौमाः ।
तस्यैव ते स्तुतिषु साहसमश्नुवानः
क्षन्तव्य [1] एष भवता करि शैल नाथ ॥ २

389 जानन्ननादिविहितान् अपराध वर्गान्
स्वामिन् भयात् किमपि वक्तुमहं न शक्तः ।
अव्याज वत्सल तथापि निरङ्कुशं मां
वात्सल्यमेव भवतो मुखरी करोति ॥ ३

390 किं व्याहरामि वरद स्तुतये कथं वा
खद्योतवत् प्रलघु सङ्कुचित प्रकाशः ।
तन्मे समर्पय मतिं च सरस्वतीं च
त्वामञ्जसा स्तुति पदैर्यदहं धिनोमि ॥ ४

[1] एव

391 मच्छक्ति मात्र गणने किमिहास्ति शक्यं
शक्येन वा तव करीश किमस्ति साध्यम् ।
यद्यस्ति साधय मया तदपि [1]त्वया वा
किं वा भवेद् भवति किञ्चिदनीहमाने ॥ ५

392 स्तोत्रं मया विरचितं त्वदधीन वाचा
त्वत्प्रीतये वरद यत् तदिदं न चित्रम् ।
आवर्जयन्ति हृदयं खलु शिक्षकाणां
मञ्जूनि पञ्जर शकुन्त विजल्पितानि ॥ ६

393 यं चक्षुषामविषयं हयमेध यज्वा
द्राघीयसा सुचरितेन ददर्श वेधाः ।
तं त्वां करीश करुणा परिणामतस्ते
भूतानि हन्त निखिलानि निशामयन्ति ॥ ७

394 तत्तत्पदैरुपहितेऽपि तुरङ्ग मेधे
शक्रादयो वरद पूर्वमलब्ध भागाः ।
अध्यक्षिते मखपतौ त्वयि चक्षुषैव
हैरण्य गर्भ हविषां रसमन्वभूवन् ॥ ८

395 सर्ग स्थिति प्रलय विभ्रम नाटिकायां
शैलूषवद् विविध वेष परिग्रहं त्वाम् ।
संभावयन्ति हृदयेन करीश धन्याः
संसार वारिनिधि सन्तरणैक पोतम् ॥ ९

[1] त्वयैव

396 प्राप्तोदयेषु वरद त्वदनुप्रवेशात्
पद्मासनादिषु शिवादिषु कञ्चुकेषु ।
तन्मात्र दर्शन विलोभित शेमुषीकाः
तादात्म्य मूढ मतयो निपतन्त्यधीराः ॥ १०

397 मध्ये विरिञ्चि शिवयोर्विहितावतारः
ख्यातोऽसि तत्समतया [1]तदिदं न चित्रम् ।
माया वशेन मकरादि शरीरिणं त्वां
तानेव पश्यति करीश यदेष लोकः ॥ ११

398 ब्रह्मेति शङ्कर इतीन्द्र इति स्वराडि(ति)
आत्मेति सर्वमिति सर्व चराचरात्मन् ।
हस्तीश सर्व वचसामवसान सीमां
त्वां सर्वकारणमुशन्त्यनपाय वाचः ॥ १२

399 आशाधिपेषु गिरिशेषु चतुर्मुखेष्व(पि)
अव्याहता विधि निषेध मयी तवाज्ञा ।
हस्तीश नित्यमनुपालन लङ्घनाभ्यां
पुंसां शुभाशुभ मयानि फलानि सूते ॥ १३

400 [2]त्रातापदि स्थिति पदं भरणं प्ररोहः
छाया करीश सरसानि फलानि च त्वम् ।
शाखागत त्रिदश बृन्द शकुन्तकानां
किं नाम नासि महतां निगम द्रुमाणाम् ॥ १४

[1] यदिदं [2] त्राता पतिः

401 सामान्य बुद्धि जनकाश्च सदादि शब्दाः
तत्त्वान्तर भ्रम कृतश्च शिवादि वाचः ।
नारायणे त्वयि करीश वहन्त्यनन्यम्
अन्वर्थ वृत्ति परिकल्पितमैक कण्ठ्यम् ॥ १५

402 सञ्चिन्तयन्त्यखिल हेय विपक्ष भूतं
शान्तोदितं शमवता हृदयेन धन्याः ।
नित्यं परं वरद सर्वगतं सुसूक्ष्मं
निष्पन्द नन्दथु मयं भवतः स्वरूपम् ॥ १६

403 विश्वातिशायि सुखरूप यदात्मकस्त्वं
व्यक्तिं करीश कथयन्ति तदात्मिकां ते ।
येनाधिरोहति मतिस्त्वदुपासकानां
सा किं त्वमेव तव वेति वितर्क डोलाम् ॥ १७

404 मोहान्धकार विनिवर्तन जागरूके
दोषा दिवापि निरवग्रहमेधमाने ।
त्वत्तेजसि द्विरद शैलपते विमृष्टे
श्लाघ्येत [1] सन्तमस पर्व सहस्र भानोः ॥ १८

405 रूढस्य चिन्मयतया हृदये करीश
स्तम्बानुकारि परिणाम विशेष भाजः ।
स्थानेषु जाग्रति चतुर्ष्वपि सत्त्ववन्तः
शाखा विभाग चतुरे तव चातुरात्म्ये ॥ १९

[1] सन्तमसमत्रा

406 नागाचलेश निखिलोपनिषन्मनीषा-
मञ्जूषिका मरकतं परिचिन्वतां त्वाम् ।
तन्वी हृदि स्फुरति काऽपि शिखा मुनीनां
सौदामनीव निभृता नव मेघ गर्भा ॥ २०

407 औदन्वते महति सद्मनि भासमाने
श्लाघ्ये च दिव्य सदने तमसः [1]परस्तात् ।
अन्तःकलेबरमिदं सुषिरं सुसूक्ष्मं
जातं करीश कथमादरणास्पदं ते ॥ २१

408 बालाकृते र्वटपलाशमितस्य यस्य
ब्रह्माण्ड मण्डलमभू दुदरैकदेशे ।
तस्यैव तद् वरद हन्त कथं प्रभूतं
वाराहमास्थितवतो वपुरद्भुतं ते ॥ २२

409 भक्तस्य दानव शिशोः परिपालनाय
भद्रां नृसिंह कुहनामधिजग्मुषस्ते ।
स्तम्भैक वर्जमधुनाऽपि करीश नूनं
[2]त्रैलाक्यमेतदखिलं नरसिंह गर्भम् ॥ २३

410 क्रामन् जगत् कपट वामनतामुपेतः
त्रेधा करीश स भवान् निदधे पदानि ।
अद्यापि जन्तव इमे विमलेन यस्य
पादोदकेन विधृतेन शिवा भवन्ति ॥ २४

[1] परस्मिन्    [2] त्रैलोक्यमेव निखिलम्

411 येनाचल प्रकृतिना रिपु संक्षयार्थी
वारां निधिं वरद पूर्वमलङ्घयस्त्वम् ।
तं वीक्ष्य सेतुमधुनापि शरीरवन्तः
सर्वे षडूर्मि बहुलं जलधिं तरन्ति ॥ २५

412 इत्थं करीश दुरपह्नव दिव्य भव्य-
रूपान्वितस्य विबुधादि विभूति साम्यात् ।
केचिद् विचित्र चरितान् भवतोऽवतारान्
सत्यान् दया परवशस्य [1] वदन्ति सन्तः ॥ २६

413 सौशील्य भावित धिया भवता कथञ्चित्
सञ्छादितानपि गुणान् वरद त्वदीयान् ।
प्रत्यक्षयन्त्यविकलं तव सन्निकृष्टाः
पत्युस्त्विषामिव पयोद वृतान् मयूखान् ॥ २७

414 नित्यं करीश तिमिराविल दृष्टयोऽपि
सिद्धाञ्जनेन भवतैव विभूषिताक्षाः ।
पश्यन्त्युपर्युपरि सञ्चरतामदृश्यं
माया निगूढमनपाय महानिधिं त्वाम् ॥ २८

415 सद्यस्त्यजन्ति वरद त्वयि बद्ध भावाः
पैतामहादिषु पदेष्वपि भाव बन्धम् ।
कस्मै स्वदेत सुख सञ्चरणोत्सुकाय
कारागृहे कनक शृङ्खलयाऽपि बन्धः ॥ २९

[1] विदन्ति

416 हस्तीश दुःख विष दिग्ध फलानुबन्धि(नि)
आब्रह्म कीट मपराहत संप्रयोगे ।
दुष्कर्म सञ्चयवशाद् दुरतिक्रमे नः
प्रत्यस्त्रमञ्जलिरसौ तव निग्रहास्त्रे ॥ ३०

417 त्वद्भक्ति पोत मवलम्बितु मक्षमाणां
पारं परं वरद गन्तु मनीश्वराणाम् ।
स्वैरं लिलङ्घयिषतां भव वारि राशिं
त्वामेव गन्तुमसि सेतुरभङ्गुरस्त्वम् ॥ ३१

418 अश्रान्त संसरण घर्म निपीडितस्य
भ्रान्तस्य मे [1] वरद भोग मरीचिकासु ।
जीवातुरस्तु [2] निरवग्रह मेधमानो
देव त्वदीय करुणामृत दृष्टि पातः ॥ ३२

419 अन्तः प्रविश्य भगवन्नखिलस्य जन्तोः
आसेदुषस्तव करीश भृशं दवीयान् ।
सत्यं भवेयमधुनापि स एव भूयः
स्वाभाविकी तव दया यदि नान्तरायः ॥ ३३

420 अज्ञात निर्गम मनागम वेदिनं माम्
[3] अन्धं न किञ्चि दवलम्बन मश्नुवानम् ।
एतावतीं गमयितुः पदवीं दयालोः
शेषाध्वलेश [4] नयने क इवातिभारः ॥ ३४

[1] विषयभोग [2] निरवग्रहजृंभमाण: [3] अन्यन्न किञ्चित् [4] गमने

421 भूयोऽपि हन्त वसतिर्यदि मे भवित्री
याम्यासु दुर्विषह वृत्तिषु यातनासु ।
सम्यग् भविष्यति ततः शरणागतानां
संरक्षितेति बिरुदं वरद त्वदीयम् ॥ ३५

422 पर्याकुलं महति दुःख पयोनिधौ मां
पश्यन् करीश यदि जोषमवस्थितस्त्वम् ।
स्फारेक्षणेऽपि मिषति त्वयि निर्निमेषं
पारे करिष्यति दया तव दुर्निवारा ॥ ३६

423 किं वा करीश कृपणे मयि रक्षणीये
धर्मादि बाह्य सहकारि गवेषणेन ।
नन्वस्ति विश्व परिपालन जागरूकः
सङ्कल्प एव भवतो निपुणः सहायः ॥ ३७

424 निर्यन्त्रणं परिणमन्ति न यावदेते
नीरन्ध्र दुष्कृत भवा दुरित प्ररोहाः ।
तावन्न चेत् त्वमुपगच्छसि शार्ङ्गधन्वा
शक्यं त्वयापि न हि वारयितुं करीश ॥ ३८

425 यावन्न पश्यति निकाममर्षणो मां
भ्रू भङ्ग भीषण कराल मुखः कृतान्तः ।
तावत् पतन्तु मयि ते भगवन् दयालोः
उन्निद्र पद्म कलिका मधुराः कटाक्षाः ॥ ३९

426 स त्वं स एव रभसो भवदौपवाह्यः
चक्रं तदेव शित धार महं च पाल्यः ।
साधारणे त्वयि करीश समस्त जन्तोः
मातङ्ग मानुष भिदा न विशेष हेतुः ॥ ४०

427 निर्वापयिष्यति कदा करिशैल धामन्
दुर्वार कर्म परिपाक महादवाग्निम् ।
प्राचीन दुःखमपि मे सुखयन्निव त्वत्-
पादारविन्द परिचार [1] रस प्रवाहः ॥ ४१

428 [2] मुक्तः स्वयं सुकृत दुष्कृत शृङ्खलाभ्याम्
अर्चिर्मुखै रधिकृतै रतिवाहिताध्वा ।
स्वच्छन्द किङ्करतया भवतः करीश
स्वाभाविकं प्रतिलभेय महाधिकारम् ॥ ४२

429 त्वं चेत् प्रसीदसि [3] तवास्मि समीपतश्चेत्
त्वय्यस्ति भक्तिरनघा करिशैल नाथ ।
संसृज्यते यदि च दास जनस्त्वदीयः
संसार एष भगवन्नपवर्ग एव ॥ ४३

430 आहूयमानमनपाय विभूति कामैः
आलोक लुप्त जगदान्ध्यम् अनुस्मरेयम् ।
आलोहितांशुकं अनाकुल हेतिजालं
हैरण्यगर्भ हयमेध हविर्भुजं त्वाम् ॥ ४४

[1] सुधाप्रवाहः [2] मुक्तस्त्वहं [3] तवास्ति

431 भूयो भूयः पुलक निचितै रङ्गकै रेधमानाः
स्थूल स्थूलान् नयन मुकुलै र्बिभ्रतो बाष्प बिन्दून् ।
धन्याः केचिद् वरद [1] भवतः संसदं भूषयन्तः
स्वान्तै रन्तर्विनय निभृतैः स्वादयन्ते पदं ते ॥ ४५

432 वरद तव विलोकयन्ति धन्याः
मरकत भूधर मातृकायमाणम् ।
व्यपगत परिकर्म वारवाणं
मृगमद पङ्क विशेष नीलमङ्गम् ॥ ४६

433 अनिभृत परिरम्भै राहिता मिन्दिरायाः
कनक वलय मुद्रां कण्ठ[2]देशे दधानः ।
फणिपति शयनीया दुत्थितस्त्वं प्रभाते
वरद सतत मन्त र्मानसं सन्निधेयाः ॥ ४७

434 तुरग विहगराज स्यन्दनान्दोलिकादिषु
अधिक मधिक मन्या मात्म शोभां दधानम् ।
अनवधिक विभूतिं हस्तिशैलेश्वरं त्वाम्
अनुदिन मनिमेषैर्लोचनै र्निर्विशेयम् ॥ ४८

435 निरन्तरं निर्विशतस्त्वदीयम्
अस्पृष्ट चिन्तापदमाभिरूप्यम् ।
सत्यं शपे वारण शैलनाथ
वैकुण्ठ वासेऽपि न मेऽभिलाषः ॥ ४९

[1] सततं [2] भागे

436 व्यातन्वाना तरुण तुलसी दामभिः स्वामभिख्यां
मातङ्गाद्रौ [1] मरकत रुचिं पुष्णती मानसे नः ।
भोगैश्वर्य प्रिय सहचरैः कापि लक्ष्मी कटाक्षैः
भूयः श्यामा भुवन जननी देवता सान्निधत्ताम् ॥ ५०

437 इति विहितमुदारं वेङ्कटेशेन भक्त्या
श्रुति सुभगमिदं यः स्तोत्रमङ्गीकरोति ।
करिशिखरि विटङ्क स्थायिनः कल्पवृक्षात्
भवति [2] फलमेशषं तस्य हस्तापचेयम् ॥ ५१



कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

[1] मरतक [2] फलमनल्पं

श्रीः

# अष्टभुजाष्टकम्



श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥



438 गजेन्द्र रक्षा त्वरितं भवन्तं
ग्राहैरिवाहं विषयैर्विकृष्टः ।
अपार विज्ञान दयानुभावम्
आप्तं सतामष्टभुजं प्रपद्ये ॥ १

439 त्वदेक शेषोऽहमनात्म तन्त्रः
त्वत्पाद लिप्सां दिशता त्वयैव ।
असत्समोऽप्यष्टभुजास्पदेश
सत्ता मिदानी [1]मुपलम्भितोऽस्मि ॥ २

440 स्वरूप रूपास्त्र विभूषणाद्यैः
परत्व चिन्तां त्वयि दुर्निवाराम् ।
भोगे मृदूपक्रमतामभीप्सन्
शीलादिभिर्वारयसीव पुंसाम् ॥ ३

441 शार्ङ्गि शरण्यान्तर शब्द भाजां
सारं च सन्तोल्य फलान्तराणाम् ।
त्वद्दास्य हेतोस्त्वयि निर्विशङ्कं
न्यस्तात्मनां नाथ बिभर्षि भारम् ॥ ४

[1] प्रतिलंभितोऽस्मि

442 अभीति हेतो रनुवर्तनीयं
नाथ त्वदन्यं न विभावयामि ।
भयं कुतः स्यात् त्वयि सानुकम्पे
रक्षा कुतः स्यात् त्वयि जात रोषे ॥ ५

443 त्वदेक तन्त्वं कमलासहाय
स्वेनैव मां रक्षितु मर्हसि त्वम् ।
त्वयि प्रवृत्ते मम किं प्रयासैः
त्वय्यप्रवृत्ते मम किं प्रयासैः ॥ ६

444 समाधि भङ्गेष्वपि संपतत्सु
शरण्य भूते त्वयि बद्ध कक्ष्ये ।
अपत्रपे सोढु मकिञ्चनोऽहं
दूराधिरोहं पतनं च नाथ ॥ ७

445 प्रासाभिलाषं त्वदनुग्रहान्मां
पद्मा निषेव्ये तव पाद पद्मे ।
आ देहपाता दपराध दूरम्
आत्मान्त कैङ्कर्य रसं विधेयाः ॥ ८

446 प्रपन्न जन पाथेयं प्रपित्सूनां रसायनम् ।
श्रेयसे जगतामेतत् श्रीमदष्टभुजाष्टकम् ॥ ९

447 शरणागत सन्त्राण त्वरा द्विगुण बाहुना ।
हरिणा वेङ्कटेशीया स्तुतिः स्वीक्रियतामियम् ॥ १०

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

श्रीः

# वेगासेतु स्तोत्रम्



श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥



448 एकं वेगवती मध्ये हस्तिशैले च दृश्यते ।
उपाय फल भावेन स्वयं व्यक्तं परं महः ॥ १

449 ईष्टे गमयितुं पारमेष सेतुरभङ्गुरः ।
यत्र सारस्वतं स्रोतो विश्राम्यति विशृङ्खलम् ॥ २

450 जयति जगदेकसेतुः
वेगवती मध्य लक्षितो देवः ।
प्रशमयति यः प्रजानां
प्रथितान् संसार जलधि कल्लोलान् ॥ ३

451 विभातु मे चेतसि विष्णु सेतुः
वेगापगा वेग विघात हेतुः ।
अम्भोजयोने र्यदुपज्ञ मासीत्
अभङ्ग रक्षा हयमेध दीक्षा ॥ ४

452 चतुरानन सप्ततन्तु गोप्ता
[1] सरितं वेगवतीमसौ निरुन्धन् ।
परिपुष्यति मङ्गलानि पुंसां
[2] भगवद्भक्तिमतां यथोक्तकारी ॥ ५

[1] समये तत्परिपन्थिनो निरुन्धन्   [2] भगवान् भक्तिमतां

453 श्रीमान् पितामहवधू परिचर्यमाणः
शेते भुजङ्ग शयने स महा भुजङ्गः ।
प्रत्यादिशन्ति भव सञ्चरणं प्रजानां
भक्तानुगन्तुरिह यस्य गतागतानि ॥ ६

454 प्रशमित हयमेध व्यापदं पद्मयोनेः
श्रितजन परतन्त्रं शेषभोगे शयानम् ।
शरणमुपगताः स्मः शान्त निःशेष दोषं
शतमख मणि सेतुं शाश्वतं वेगवत्याः ॥ ७

455 शरणमुपगतानां सोऽयमादेश कारी
शमयति परितापं संमुखः सर्व जन्तोः ।
शतगुण परिणामः सन्निधौ यस्य नित्यं
वर वितरण भूमा वारणाद्रीश्वरस्य ॥ ८

456 काञ्चीभाग्यं कमल निलया [1] चेतसोऽभीष्ट सिद्धिः
कल्याणानां निधिरविकलः कोऽपि कारुण्य राशिः ।
पुण्यानां नः परिणतिरसौ भूषयन् [2] भोगिशय्यां
वेगासेतुर्जयति विपुलो विश्व रक्षैकहेतुः ॥ ९

457 वेगासेतोरिदं स्तोत्रं वेङ्कटेशेन निर्मितम् ।
ये पठन्ति जनास्तेषां यथोक्तं कुरुते हरिः ॥ १०

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

[1] चेतसो दिष्टसिद्धिः [2] भोग शय्यां

श्रीः

# कामासिकाष्टकम्



श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥



458 श्रुतीनामुत्तरं भागं वेगवत्याश्च दक्षिणम् ।
कामादधिवसन् जीयात् कश्चिदद्भुत केसरी ॥ १

459 तपनेन्द्वग्नि नयनः तापानपचिनोतु नः ।
तापनीय रहस्यानां सारः कामासिका हरिः ॥ २

460 आकण्ठमादिपुरुषं
कण्ठीरवमुपरि कुण्ठितारातिम् ।
वेगोपकण्ठ सङ्गात्
विमुक्त वैकुण्ठ बहुमतिमुपासे ॥ ३

461 बन्धुमखिलस्य जन्तोः
बन्धुर पर्यङ्क बन्ध रमणीयम् ।
विषम विलोचनमीडे
वेगवती पुलिन केलि नरसिंहम् ॥ ४

462 स्व स्थानेषु मरुद्गणान् नियमयन् स्वाधीन सर्वेन्द्रियः
पर्यङ्क स्थिर धारणा प्रकटित प्रत्यङ्मुखावस्थितिः ।
प्रायेण [1] प्रणिपेदुषः प्रभुरसौ योगं निजं शिक्षयन्
कामानातनुता दशेष जगतां कामासिका केसरी ॥ ५

[1] प्रणिपेतुषः, प्रणिपेदुषां

463 विकस्वर नख स्वरु क्षत हिरण्य वक्षः स्थली
निरर्गल विनिर्गलद्रुधिर सिन्धु सन्ध्यायिताः ।
अवन्तु मदनासिका मनुज पञ्च वक्त्रस्य माम्
अहंप्रथमिका मिथः प्रकटिताहवा बाहवः ॥ ६

464 सटा पटल भीषणे सरभसाट्टहासोद्भटे
स्फुरत्क्रुधि परिस्फुटद् भ्रुकुटिकेऽपि वक्त्रे कृते ।
कृपा कपट केसरिन् दनुज डिम्भ दत्त स्तना
सरोज सदृशा दृशा [1] व्यतिविषज्य ते व्यज्यते ॥ ७

465 त्वयि रक्षति रक्षकैः किमन्यैः
त्वयि चारक्षति रक्षकैः किमन्यैः ।
इति निश्चित धीः श्रयामि नित्यं
नृहरे वेगवती तटाश्रयं त्वाम् ॥ ८

466 इत्थं स्तुतः सकृदिहाष्टभिरेष पद्यैः
श्रीवेङ्कटेश रचितैस्त्रिदशेन्द्र वन्द्यः ।
दुर्दान्त घोर दुरित द्विरदेन्द्र भेदी
कामासिका नरहरिर्वितनोतु कामान् ॥ ९

÷✱÷

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥



[1] व्यतिभिषज्य

श्रीः

# शरणागति दीपिका

—०ॐ०—

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

—x—

467 पद्मा पतेः स्तुति पदेन विपच्यमानं
पश्यन्त्विह प्रपदन प्रवणा महान्तः ।
मद्वाक्य संवलितमप्यजहत्स्वभावं
मान्यं यतीश्वर महानस संप्रदायम् ॥ १

468 नित्यं श्रिया वसुधया च निषेव्यमाणं
निर्व्याज निर्भर दया भरितं विभाति ।
वेदान्त वेद्यमिह वेगवती समीपे
दीप प्रकाश इति दैवतमद्वितीयम् ॥ २

469 दीपस्त्वमेव जगतां दयिता रुचिस्ते
दीर्घं तमः प्रतिनिवर्त्यमिदं युवाभ्याम् ।
स्तव्यं [1]स्तव प्रियमतः शरणोक्ति वश्यं
स्तोतुं [2]भवन्तमभिलष्यति जन्तुरेषः ॥ ३

470 पद्माकरादुपगता परिषस्वजे त्वां
वेगा सरिद्विहरणा कलशाब्धि कन्या ।
आहुस्तदा प्रभृति दीप समाव भासम्
आजानतो मरकत प्रतिमं वपुस्ते ॥ ४

[1] स्तवप्रियतमं [2] भवन्तमिह वाञ्छति; भवन्तमभिवाञ्छति

471 स्वामिन् गभीर सुभगं श्रम हारि पुंसां
माधुर्य रम्यमनघं मणि भङ्ग दृश्यम् ।
[1]वेगान्तरे वितनुते प्रतिबिम्ब शोभां
लक्ष्मी सरः सरसिजाश्रयमङ्ककं ते ॥ ५

472 आविश्य धारयसि विश्वममुष्य यन्ता
शेषी श्रियः पतिरशेष तनुर्निदानम् ।
इत्यादि लक्षण गणैः पुरुषोत्तमं त्वां
जानाति यो जगति सर्वविदेष गीतः ॥ ६

473 विश्वं शुभाश्रयवदीश वपुस्त्वदीयं
सर्वा गिरस्त्वयि पतन्ति ततोऽसि सर्वः ।
सर्वे च वेद विधयस्त्वदनुग्रहार्थाः
सर्वाधिकस्त्वमिति तत्त्व विदस्तदाहुः ॥ ७

474 ज्ञानं बलं नियमन क्षमताऽथ वीर्यं
शक्तिश्च तेज इति ते गुण षट्कमाद्यम् ।
सर्वातिशायिनि हिमोपवनेश यस्मिन्
अन्तर्गतो जगदिव त्वयि सद्गुणौघः ॥ ८

475 दीपावभास दयया विधि पूर्वमेतत्
विश्वं विधाय निगमानपि दत्तवन्तम् ।
शिष्यायिताः शरणयन्ति मुमुक्षवस्त्वाम्
आद्यं गुरुं [2]गुरुपरंपरयाऽधिगम्यम् ॥ ९

[1] वेगान्तरेऽपि तनुते [2] गुरुपरम्परयाऽभिगम्यम्

476 सत्ता स्थिति प्रयतन प्रमुखै रुपात्तं
स्वार्थं सदैव भवता स्वयमेव विश्वम् ।
दीप प्रकाश तदिह त्वदवाप्तये त्वाम्
अव्याज सिद्धमनपायम् उपायमाहुः ॥ १०

477 भोग्यं मुकुन्द गुण भेद मचेतनेषु
[1] भोक्तृत्वमात्मनि निवेश्य निजेच्छयैव ।
[2] पाञ्चालिका शुक विभूषण भोग दायी
सम्राडिवात्मसमया सह मोदसे त्वम् ॥ ११

478 त्वां मातरं च पितरं सहजं निवासं
सन्तः समेत्य शरणं सुहृदं गतिं च ।
निःसीम नित्य निरवद्य सुख प्रकाशं
दीप प्रकाश सविभूति गुणं विशन्ति ॥ १२

479 जन्तोरमुष्य जनने विधि शम्भु दृष्टौ
रागादिनेव रजसा तमसा च योगः ।
द्वैपायन प्रभृतयस्त्वदवेक्षितानां
सत्त्वं विमुक्ति नियतं भवतीत्युशन्ति ॥ १३

480 कर्मस्वनादि विषमेषु समो दयालुः
स्वेनैव [3] क्लप्त मपदेश मवेक्षमाणः ।
स्वप्राप्तये तनुभृतां त्वरसे मुकुन्द
स्वाभाविकं तव सुहृत्त्वमिदं गृणन्ति ॥ १४

[1] भोक्तृत्वमात्मसु [2] पाञ्चालिकांशुकविभीषण; पाञ्चालिकांशुकविभूषण
[3] क्लृप्तमुपदेशमपेक्षमाणः

481 निद्रायितान् निगम वर्त्मनि [1] चारु दर्शी
प्रस्थान शक्ति [2] सहितान् प्रतिबोध्य जन्तून् ।
जीर्ण स्तनन्धय जडान्ध[3]मुखानिवास्मान्
नेतुं मुकुन्द यतसे दयया [4] सह त्वम् ॥ १५

482 भक्तिः प्रपत्तिरथ वा भगवंस्तदुक्तिः
तन्निष्ठ संश्रय इतीव विकल्प्यमानम् ।
[5] यं कंचिदेक मुपपादयता त्वयैव
त्रातास्तरन्त्यवसरे भविनो भवाब्धिम् ॥ १६

483 नाना विधै रकपटै रजहत्स्वभावैः
अप्राकृतै निंज विहार वशेन सिद्धैः ।
आत्मीय रक्षण विपक्ष[6]विनाशनार्थैः
संस्थापयस्यनघ जन्मभिराद्य धर्मम् ॥ १७

484 निम्नोन्नतानि निखिलानि पदानि गाढं
मज्जन्ति ते महिम सागर शीकरेषु ।
नीरन्ध्रमाश्रयसि नीच जनांस्तथापि
शीलेन हन्त शिशिरोपवनेश्वर त्वम् ॥ १८

485 काशी वृकान्धक शरासन बाण गङ्गा-
संभूति नामकृति[7]संवदनाद्युदन्तैः ।
स्वोत्त्यम्बरीष भय शाप मुखैश्च शम्भुं
त्वन्निघ्न मीक्षितवता मिह कः शरण्यः ॥ १९

[1] चोरदर्शी; पारदर्शी [2] रहितान् [3] मुखानिवान्यान् [4] सहत्वं [5] यत्किंचित्
[6] विनाशनार्हैः [7] संवननाद्युदन्तैः

486 क्वासौ विभुः क्व वयमित्युपसत्ति भीतान्
जन्तून् क्षणात् [1]त्वदनुवृत्तिषु योग्ययन्ती ।
संप्राप्त सद्गुरु तनोः समये दयालोः
आत्मावधिर्भवति [2]शिक्षित धीः क्षणं ते ॥ २०

487 योग्यं यमैश्च नियमैश्च विधाय चित्तं
सन्तो जितासनतया स्ववशासु वर्गाः ।
प्रत्याहृतेन्द्रिय गणाः स्थिर धारणास्त्वां
ध्यात्वा समाधि युगलेन विलोकयन्ति ॥ २१

488 पद्माभिराम वदनेक्षण पाणि पादं
दिव्यायुधाभरण माल्य विलेपनं त्वाम् ।
योगेन नाथ शुभमाश्रय मात्मवन्तः
सालम्बनेन परिचिन्त्य न यान्ति [3]तृप्तिम् ॥ २२

489 मानातिलङ्घि सुख बोध महाम्बुराशौ
मग्नास्त्रिसीम रहिते भवतः स्वरूपे ।
ताप त्रयेण विहतिं न भजन्ति [4]भूयः
संसार घर्म जनितेन समाधिमन्तः ॥ २३

490 धी संस्कृतान् विदधतामिह कर्म भेदान्
शुद्धं जिते मनसि चिन्तयतां स्वमेकम् ।
त्वत्कर्म सक्त मनसामपि चापरेषां
सूते फलान्यभिमतानि भवान् प्रसन्नः ॥ २४

[1] त्वदनुभूतिषु [2] संस्कृतधीः सस्कृतिरीक्षणं ते [3] शान्तिम् [4] सन्तः

491 उद्धाहु भावमपहाय यथैव खर्वः
[1]प्रांशु फलार्थ मभियाचति योगि चिन्त्य ।
एवं सुदुष्करमुपाय गणं विहाय
स्थाने निवेशयति तस्य [2]विचक्षणस्त्वाम् ॥ २५

492 नित्यालसार्हमभयं निरपेक्षमन्यैः
विश्वाधिकार मखिलाभिमत प्रसूतिम् ।
शिक्षाविशेष[3]सुभगं व्यवसाय सिद्धाः
सत्कुर्वते त्वयि मुकुन्द षडङ्ग योगम् ॥ २६

493 त्वत्प्रातिकूल्य विमुखाः स्फुरदानुकूल्याः
कृत्वा पुनः कृपणतां विगतातिशङ्काः ।
स्वामिन् भव स्वयमुपाय इतीरयन्तः
त्वय्यर्पयन्ति निज भारमपार शक्तौ ॥ २७

494 अर्थान्तरेषु विमुखान् अधिकार हानेः
[4]श्रद्धाधिकांस्त्वदनुभूति विलम्ब भीतान् ।
दीप प्रकाश लभसे सुचिरात् [5]कृतीव
न्यस्तात्मनस्तव पदे निभृतान् प्रपन्नान् ॥ २८

495 मन्त्रैरनुश्रव मुखेष्वधिगम्यमानैः[6]
स्वाधि क्रिया समुचितैर्यदि वाऽन्यवाक्यैः ।
नाथ त्वदीय चरणौ शरणं गतानां
नैवायुतायुत कलाऽप्यपरैरवाप्या ॥ २९

[1] प्रांशुं फलं समभियाचति [2] विचक्षणं [3] सुलभं [4] श्रद्धाधनान् [5] कृती त्वम् अनुगम्यमानैः

496 दत्ताः प्रजा जनकवत् तव देशिकेन्द्रैः
पत्याऽभिनन्द्य भवता परिणीयमानाः ।
मध्ये सतां महितभोग विशेष सिद्ध्यै
[1]माङ्गल्य सूत्रमिव बिभ्रति किङ्करत्वम् ॥ ३०

497 दिव्ये पदे नियत किङ्करताधिराज्यं
[2]दातुं त्वदीय दयया विहिताभिषेकाः ।
आदेहपातमनघाः परिचर्यया ते
युञ्जानचिन्त्य युवराज पदं भजन्ति ॥ ३१

498 त्वां पाञ्चरात्रिक नयेन पृथग्विधेन
वैखानसेन च पथा नियताधिकाराः ।
संज्ञा विशेष नियमेन समर्चयन्तः
प्रीत्या नयन्ति फलवन्ति दिनानि धन्याः ॥ ३२

499 [3]वर्णाश्रमादि नियत क्रम सूत्र बद्धा
भक्त्या यथार्ह विनिवेशित पत्र पुष्पा ।
मालेव काल विहिता हृदयङ्गमा त्वाम्
आमोदयत्यनुपराग धियां सपर्या ॥ ३३

500 ब्रह्मा गिरिश इतरेऽप्यमरा य एते
निर्धूय तान् निरय तुल्य फल प्रसूतीन् ।
प्राप्तुं तवैव पद पद्म युगं प्रतीताः
पातिव्रतीं त्वयि [4]वहन्ति धरावरज्ञाः ॥ ३४

[1] मङ्गल्य सूत्रं [2] प्राप्तुं त्वयैव दयया, दातुं त्वयैव
[3] वर्णाश्रमादि नियम स्थिर सूत्र बन्धा [4] भजन्ति

501

नाथ त्वदिष्ट विनियोग विशेष सिद्धं
[1]शेषत्व सारमनपेक्ष्य निजं गुणज्ञाः ।
भक्तेषु ते वर गुणार्णव पारतन्त्र्यात्
दास्यं भजन्ति विपणि व्यवहार योग्यम् ॥ ३५

502

सद्भिस्त्वदेक शरणैर्नियतं[2] सनाथाः
सर्पादिवत् त्वदपराधिषु दूर याताः ।
धीरास्तृणीकृत विरिञ्च पुरन्दराद्याः
कालं क्षिपन्ति भगवन् करणैरवन्ध्यैः ॥ ३६

503

वागादिकं मनसि तत् पवने स जीवे
भूतेष्वयं पुनरसौ त्वयि तैः समेति ।
साधारणोत्क्रमण कर्म समाश्रितानां
यन्त्रा मुकुन्द भवतैव यथा यमादेः ॥ ३७

504

सव्यान्ययो रयनयो र्निशि वासरे वा
सङ्कल्पितायु रवधीन् सपदि प्रपन्नान् ।
हार्दः स्वयं निजपदे विनिवेशयिष्यन्
नाडीं प्रवेशयासि नाथ शताधिकां त्वम् ॥ ३८

505

अर्चिर्दिनं विशदपक्ष उदक्प्रयाणं
संवत्सरो मरुदशीतकरः शशाङ्कः ।
सौदामनी जलपतिर्वलजित् प्रजेशः
इत्यातिवाहिक सखो नयसि स्वकीयान् ॥ ३९

[1] शेषत्व सारमनुपेक्ष्य [2] नियताः

506 त्वच्छेष वृत्त्यनुगुणै र्महितै र्गुणौघैः[1]
आविर्भवत्ययुतसिद्ध निज स्वरूपे ।
त्वल्लक्षणेषु नियतेष्वपि भोग मात्रे
साम्यं भजन्ति परमं भवता विमुक्ताः ॥ ४०

507 इत्थं त्वदेक शरणै रनघैरवाप्ये
त्वत्किङ्करत्व विभवे स्पृहयाऽपराध्यन् ।
आत्मा ममेति भगवन् भवतैव [2]गीता
वाचो निरीक्ष्य भरणीय [3]इह त्वयाऽहम् ॥ ४१

508 पद्मा मही प्रभृतिभिः परिभुक्त भूम्नः
का हानिरत्र मयि भोक्तरि ते भवित्री ।
दुष्येत् किमङ्घ्रि तटिनी तव देव सेव्या
दुर्वार तर्ष चपलेन शुनाऽवलीढा ॥ ४२

509 सत्वानि नाथ [4]विविधान्यभिसञ्जिघृक्षोः
संसार नाट्य रसिकस्य तवास्तु तृप्त्यै ।
प्रत्यक्पराङ्मुख मतेरसमीक्ष्य कर्तुः
प्राचीन सज्जन विडम्बन भूमिका मे ॥ ४३

510 कर्तव्यमित्यनुकलं कलयाम्यकृत्यं
स्वामिन्नकृत्यमिति[5] कृत्यमपि त्यजामि ।
अन्यद् व्यतिक्रमण जातमनन्तमर्थ-
स्थाने दया [6]भवतु ते मयि सार्वभौमी ॥ ४४

[1] सहिते गुणौघैः, सहितैर्गुणौघैः [2] गीतान् प्राचो निरीक्ष्य; गीताः प्रायो निरीक्ष्य
[3] इति [4] विविधान्यपि सञ्जिघृक्षोः [5] इव [6] वहतु

511

यं पूर्वमाश्रित जनेषु भवान् यथावत्
धर्मं परं प्रणिजगौ स्वयमानृशंस्यम् ।
संस्मारितस्त्वमसि तस्य शरण्य भावात्
नाथ त्वदात्त समया ननु मादृशार्थम् ॥ ४५

512

त्राणं भवेति सकृदुक्ति समुद्यतानां
तैस्तैरसह्य वृजिनै रुदरंभरिस्ते ।
सत्यापिता शतमखात्मज शङ्करादौ
नाथ क्षमा न खलु जन्तुषु मद्विवर्जम् ॥ ४६

513

कर्मादिषु त्रिषु [1] कथां कथमप्यजानन्
[2] कामादि मेदुरतया कलुष प्रवृत्तिः ।
साकेत संभव चराचर[3] जन्तु नीत्या
वीक्ष्यः प्रभो विषय वासितयाऽप्यहं ते ॥ ४७

514

ब्रह्माण्ड लक्ष शत कोटि गणाननन्तान्
एक क्षणे विपरिवर्त्य विलज्जमानाम् ।
मत्पाप राशि मथने मधुदर्प हन्त्रीं
शक्तिं नियुङ्क्ष्व शरणागतवत्सल त्वम् ॥ ४८

515

आस्तां प्रपत्तिरिह देशिक[4] साक्षिका मे
सिद्धा तदुक्तिरनघा [5] त्वदपेक्षितार्था ।
न्यस्तस्य पूर्वनिपुणैस्त्वयि नन्विदानीं
[6] पूर्णे मुकुन्द पुनरुक्त उपाय एषः ॥ ४९

[1] कथं कथमित्यजानन् [2] कामादिमांसलतया [3] जन्तुरीत्या [4] साक्षिकं
[5] त्वदवेक्षितार्था [6] पूर्णो

516 यद्वा मदर्थ परिचिन्तनया [1] तवालं
संज्ञां प्रपन्न इति साहसिको बिभर्मि ।
एवं स्थिते त्वदपवाद निवृत्तये मां
[2] पात्रीकुरुष्व भगवन् भवतः कृपायाः ॥ ५०

517 त्यागे गुणेश शरणागत संज्ञिनो मे
स्त्यानागसोऽपि सहसैव परिग्रहे वा ।
किं नाम कुत्र भवतीति कृपादिभिस्ते
गूढं [3] निरूपय गुणेतर तारतम्यम् ॥ ५१

518 स्वामी दया जलनिधिर्मधुरः क्षमावान्
शीलाधिकः श्रित वशः शुचिरत्युदारः ।
एतानि हातुमनघो न किलार्हसि त्वं
[4] विख्यातिमन्ति बिरुदानि मया सहैव ॥ ५२

519 वेला धनञ्जय रथादिषु वाचिकैः स्वैः
आघोषिता मखिल[5]जन्तु शरण्यतां ते ।
जानन् दशानन शतादधिकागसोऽपि
पश्यामि दत्तमभयं स्वकृते त्वया मे ॥ ५३

520 रक्ष्यस्त्वया तव भरोऽस्म्यहमित्यपूर्वान्
वर्णानिमा नहृदयानपि वाचयित्वा ।
मद्दोष निर्जित गुणो महिषी समक्षं
[6] मा भूस्त्वदन्य इव मोघ परिश्रमस्त्वम् ॥ ५४

हं [2] पात्रं कुरुष्व [3] विचारय [4] विख्यात धीर बिरुदानि [5] लोक [6] मा भूस्तदन्य

521 मुख्यं च यत्प्रपदनं स्वयमेव साध्यं
दातव्यमीश कृपया तदपि त्वयैव ।
तन्मे भवच्चरण सङ्गवती मवस्थां
पश्यन्नुपाय फलयोरुचितं विधेयाः ॥ ५५

522 अल्पास्थिरै रसुकरै रसुखावसानैः
दुःखान्वितै रनुचितै रभिमान मूलैः ।
प्रत्यक्परागनुभवैः परिघूर्णितं मां
त्वय्येव नाथ चरितार्थय [1]निर्विविक्षुम् ॥ ५६

523 तत्त्वावबोध शमित प्रतिकूल वृत्तिं
कैङ्कर्य लब्ध करण त्रय सामरस्यम् ।
कृत्वा त्वदन्य विमुखं कृपया स्वयं मां
स्फार्तिं दृशोः प्रतिलभस्व जगज्जनन्याः ॥ ५७

524 इत्थं स्तुति प्रभृतयो यदि संमताः स्युः
यद्वापराध[2]पदवीष्वभिसंविशन्ति ।
स्तोकानुकूल्य कणिका वश वर्तिनस्ते
प्रीति क्षमा प्रसरयो रहमस्मि लक्ष्यम् ॥ ५८

[1] निर्व्यपेक्षं, निर्विपक्षं, निर्विवक्षन् [2] पदवीष्वपि संविशन्ति

525 स्नेहोपपन्न विषयः स्व दशा विशेषात्
भूयस्तमिस्र शमनीं भुवि वेङ्कटेशः ।
दिव्यां स्तुतिं निरमिमीत सतां नियोगात्
दीपप्रकाश शरणागति दीपिकाख्याम् ॥* ५९



**कवितार्किकसिंहाय कल्याणगुणशालिने ।**
**श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥**



***एतदनन्तरं "एतां दीपप्रकाश" इत्ययं श्लोक. केषुचिन्मुद्रितेषु पुस्तकेषु दृश्यते । स तु न श्रीमदाचार्यानुगृहीत इति सांप्रदायिका: ।**

एतां दीपप्रकाश स्तुतिमिह रुचिरामित्थमभ्यस्यमानः
सम्यक् दृष्ट्वा शरण्य प्रभृति निगदितं न्यास विद्याख्य तत्त्वम् ।
प्रत्यासीदद्विमुक्तानुभव फल समुद्भेद लब्ध्या कृतार्थः
प्राप्त पिण्डस्य भेदे परिणमति पर ब्रह्म सब्रह्मचारी ॥

श्रीः

# परमार्थस्तुतिः

—०❖०—

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

—×—

526 श्रीमद्गृध्र सरस्तीर पारिजात मुपास्महे ।
यत्र तुङ्गैरतुङ्गैश्च प्रणतैर्गृह्यते फलम् ॥ १

527 गुरुभि स्त्वदनन्य सर्व भावैः
गुण सिन्धौ कृत संप्लवस्त्वदीये ।
रणपुङ्गव वन्दि भावमिच्छन्
अहमस्म्येक मनुग्रहास्पदं ते ॥ २

528 भुवनाश्रय भूषणास्त्र वर्गं
मनसि त्वन्मयतां ममातनोतु ।
वपुराहव पुङ्गव त्वदीयं
महिषीणा मनिमेष दर्शनीयम् ॥ ३

529 अभिरक्षितुमग्रतः स्थितं त्वां
प्रणवे पार्थ रथे च भावयन्तः ।
अहित प्रशमैरयत्न लभ्यैः
कथयन्त्याहव पुङ्गवं गुणज्ञाः ॥ ४

530 कमला निरपाय धर्मपत्नी
करुणाद्याः स्वयमृत्विजो गुणास्ते ।
अवनं श्रयतामहीनमाद्यं
स च धर्मस्त्वदनन्य सेवनीयः ॥ ५

531 कृपणाः सुधियः कृपा सहायं
शरणं त्वां रण पुङ्गव प्रपन्नाः ।
अपवर्गं नयादनन्य भावाः
वरिवस्या रसमेक माद्रियन्ते ॥ ६

532 अवधीर्य चतुर्विधं पुमर्थं
भवदर्थे विनियुक्त जीवितः सन् ।
लभते भवतः फलानि जन्तुः
निखिलान्यत्र निदर्शनं जटायुः ॥ ७

533 शरणागत रक्षण व्रती मां
न विहातुं रण पुङ्गवार्हसि त्वम् ।
विदितं भुवने विभीषणो वा
यदि वा रावण इत्युदीरितं ते ॥ ८

534 भुजगेन्द्र गरुत्मदादि लभ्यैः
त्वदनुज्ञानुभव प्रवाह भेदैः ।
स्व पदे रण पुङ्गव [1]स्वयं मां
परिचर्या विभवैः परिष्क्रियेथाः[2] ॥ ९

535 विमलाशय वेङ्कटेश जन्मा
रमणीया रणपुङ्गव प्रसादात् ।
अनसूयुभिरादरेण भाव्या
परमार्थ स्तुतिरन्वहं प्रपन्नैः ॥ १०

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

[1] स्वयं मे [2] परिष्कुरुषीष्टाः

श्रीः

# सुदर्शनाष्टकम्

—०❖❖०—

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

—x—

536
प्रतिभट श्रेणि भीषण वर गुण स्तोम भूषण
जनि भय स्थान तारण जगदवस्थान कारण ।
निखिल दुष्कर्म कर्शन निगम सद्धर्म दर्शन
जय जय श्री सुदर्शन जय जय श्री सुदर्शन ॥ १

537
शुभ जगद्रूप मण्डन [1]सुर गण त्रास खण्डन
शत-मख ब्रह्म वन्दित शत-पथ ब्रह्म नन्दित ।
प्रथित विद्वत्सपक्षित भजदहिर्बुध्न्य लक्षित
जय जय श्री सुदर्शन जय जय श्री सुदर्शन ॥ २

538
स्फुट तटिज्जाल पिञ्जर पृथु-तर ज्वाल पञ्जर
परिगत प्रत्न विग्रह [2]परिमित प्रज्ञ दुर्ग्रह ।
प्रहरण ग्राम मण्डित परिजन त्राण पण्डित
जय जय श्री सुदर्शन जय जय श्री सुदर्शन ॥ ३

539
निज पद प्रीत सद्गण निरुपधि स्फीत षड्गुण
निगम निर्व्यूढ वैभव निज पर व्यूह वैभव ।
हरि हय द्वेषि दारण हर पुर प्लोष कारण
जय जय श्री सुदर्शन जय जय श्री सुदर्शन ॥ ४

[1] सुर जन [2] पटुतर प्रज्ञ

540 दनुज विस्तार कर्तन [1]जनि तमिस्रा विकर्तन
[2]दनुज विद्या निकर्तन [3]भजदविद्या निवर्तन ।
अमर दृष्ट स्व विक्रम समर जुष्ट भ्रमि क्रम
जय जय श्री सुदर्शन जय जय श्री सुदर्शन ॥ ५

541 प्रतिमुखालीढ बन्धुर पृथु महा हेति दन्तुर
[4]विकट माया बहिष्कृत [5]विविध माला परिष्कृत ।
[6]पृथु महायन्त्र[7]तन्त्रित दृढ दया तन्त्र यन्त्रित
जय जय श्री सुदर्शन जय जय श्री सुदर्शन ॥ ६

542 महित[8]संपत्सदक्षर[9] विहित संपत्षडक्षर
षडर चक्र प्रतिष्ठित सकल तत्त्व प्रतिष्ठित ।
विविध सङ्कल्प कल्पक विबुध सङ्कल्प कल्पक
जय जय श्री सुदर्शन जय जय श्री सुदर्शन ॥ ७

543 [10]भुवन नेतस्त्रयीमय सवन तेजस्त्रयीमय
निरवधि स्वादु चिन्मय निखिल शक्ते जगन्मय ।
अमित विश्व क्रियामय शमित विष्वग्भयामय
जय जय श्री सुदर्शन जय जय श्री सुदर्शन ॥ ८

544 द्विचतुष्कमिदं प्रभूत सारं पठतां वेङ्कटनायक प्रणीतम् ।
विषमेऽपि मनोरथः प्रधावन् न विहन्येत रथाङ्ग धुर्य गुप्तः ॥ ९

-:*:-

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

—o—

[1] दनुजविद्या विकर्तन [2] जनितमिस्राविकर्तन [3] जगदविद्या निकर्तन [4] विकटमाला परिष्कृत
[5] विविध माया बहिष्कृत [6] स्थिर [7] यन्त्रित [8] संवित् [9] क्षितिक्षर [10] नेत्र त्रयीमय

श्रीः

# षोडशायुध स्तोत्रम्

—:★०★:—

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

—※—

स्व सङ्कल्प कला कल्पैरायुधैरायुधेश्वरः ।
जुष्टः षोडशभिर्दिव्यैर्जुषतां [1]वः परः पुमान् ॥ १

यदायत्तं जगच्चक्रं कालचक्रं च शाश्वतम् ।
पातु [2]वस्तत्परं चक्रं चक्र रूपस्य चक्रिणः ॥ २

547 यत्प्रसूति शतैरासन् [3]द्रुमाः परशु लाञ्छिताः ।
स दिव्यो हेति राजस्य परशुः परिपातु [4]वः ॥ ३

548 हेलया हेतिराजेन यस्मिन् दैत्याः समुद्धृते ।
शकुन्ता इव धावन्ति स कुन्तः पालयेत [5]वः ॥ ४

549 दैत्य दानव मुख्यानां दण्ड्यानां येन दण्डनम् ।
हेति दण्डेश दण्डोऽसौ भवतां[6] दण्डयेद् द्विषः ॥ ५

550 [7]अनन्यान्वय भक्तानां रुन्धन्नाशा मतङ्गजान् ।
अनङ्कुश विहारो [8]वः पातु हेतीश्वराङ्कुशः ॥ ६

[1,2,4,5,8] नः [3] रुद्राः [6] सावस्माकं [7] अनन्यत्वाय

551 संभूय शलभायन्ते यत्र पापानि देहिनाम् ।
स पातु शत वक्त्राग्नि र्हेतिर्हेतीश्वरस्य [1]वः ॥ ७

552 अविद्यां स्व प्रकाशेन विद्यारूपश्छिनत्ति यः ।
स सुदर्शन निस्त्रिंशः सौतु [2]वस्तत्त्व दर्शनम् ॥ ८

553 क्रिया शक्ति गुणो विष्णोर्यो भवत्यतिशक्तिमान् ।
अकुण्ठ शक्तिः सा शक्तिरशक्तिं वारयेत [3]वः ॥ ९

554 तारत्वं यस्य संस्थाने शब्दे च परिदृश्यते ।
प्रभोः प्रहरणेन्द्रस्य पाञ्चजन्यः स पातु [4]वः ॥ १०

555 [5]यं सात्त्विकमहङ्कारम् आमनन्त्यक्ष[6]सायकम् ।
अव्याद् वश्चक्ररूपस्य तद्धनुः शार्ङ्गधन्वनः ॥ ११

556 आयुधेन्द्रेण येनैव विश्वसर्गो [7]विविच्यते ।
स [8]वः सौदर्शनः कुर्यात् पाशः पाशविमोचनम् ॥ १२

557 विहारो येन देवस्य विश्वक्षेत्रकृषीवलः ।
[9]व्यज्यते तेन सीरेण नासीर विजयोस्तु [10]वः ॥ १३

558 आयुधानामहं वज्रं इत्यगीयत यः स [11]वः ।
अव्याद्धेतीश[12]वज्रोऽसावदधीच्यस्थि संभवः ॥ १४

[1, 2, 3, 4, 8, 10, 11] नः [5] यत् [6] साधकम् [7] विमुच्यते, विरच्यते
[9] व्यज्यतेऽनेन [12] वज्रोऽयं दधीच्यस्थि समुद्भव:

559 विश्व संहृति शक्तिर्या विश्रुता बुद्धि रूपिणी ।
सा [1]वः सौदर्शनी भूयात् [2]गद प्रशमनी गदा ॥ १५

560 [3]यात्यतिक्षोद शालित्वं [4]मुसलो येन तेन [5]वः ।
हेतीश मुसलेनाशु भिद्यतां मोह मौसलम् ॥ १६

561 शूलि दृष्ट मनोर्वाच्यो येन शूलयति द्विषः ।
भवतां तेन भवतात् त्रिशूलेन [6]विशूलता ॥ १७

562 अस्त्र ग्रामस्य कृत्स्नस्य प्रसूतिं यं प्रचक्षते ।
सोऽव्यात् सुदर्शनो विश्वम् [7]आयुधैः षोडशायुधः ॥ १८

563 श्रीमद्वेङ्कटनाथेन श्रेयसे भूयसे सताम् ।
कृतेयमायुधेन्द्रस्य षोडशायुध संस्तुतिः ॥ १९





कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥



[1] नः [2] भय [3] यांत्यति [4] मुसल्या [5] नः [6] विशूलिता [7] आयुधः

श्री :

# दया शतकम्

—:★०★:—

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

—◊◊—

प्रपद्ये तं गिरिं प्रायः श्रीनिवासानुकम्पया ।
इक्षु सार स्रवन्त्येव यन्मूर्त्या शर्करायितम् ॥ १

विगाहे तीर्थ बहुलां शीतलां गुरु सन्ततिम् ।
[1]श्रीनिवास दयाम्भोधि परीवाह परम्पराम् ॥ २

कृतिनः कमलावास कारुण्यैकान्तिनो भजे ।
धत्ते यत्सूक्ति रूपेण त्रिवेदी सर्वयोग्यताम् ॥ ३

पराशर मुखान् वन्दे भगीरथ नये स्थितान् ।
कमला कान्त कारुण्य गङ्गाप्लावित मद्विधान् ॥ ४

अशेष विघ्न शमनम् अनीकेश्वरमाश्रये ।
श्रीमतः [2]करुणाम्भोधौ शिक्षा स्रोत इवोत्थितम् ॥ ५

समस्त जननीं वन्दे चैतन्य स्तन्य दायिनीम् ।
[3]श्रेयसीं श्रीनिवासस्य करुणामिव रूपिणीम् ॥ ६

[1] श्रीनिवासदयाम्भोधेः [2] करुणाम्भोधेः [3] प्रेयसीं

570 वन्दे वृषगिरीशस्य महिषीं विश्व धारिणीम् ।
तत्कृपा प्रतिघातानां क्षमया वारणं यया ॥ ७

571 निशामयतु मां नीला यद्भोग पटलैर्ध्रुवम् ।
भावितं श्रीनिवासस्य भक्त दोषेष्वदर्शनम् ॥ ८

572 कमप्यनवधिं वन्दे करुणा वरुणालयम् ।
वृषशैल तटस्थानां स्वयं व्यक्तिमुपागतम् ॥ ९

573 अकिञ्चन निधिं सूतिम् अपवर्ग त्रिवर्गयोः ।
अञ्जनाद्रीश्वर दयाम् अभिष्टौमि निरञ्जनाम् ॥ १०

574 अनुचर शक्त्यादि गुणाम्
अग्रेसर बोध विरचितालोकाम् ।
स्वाधीन वृषगिरीशां
स्वयं प्रभूतां प्रमाणयामि दयाम् ॥ ११

575 अपि निखिल लोक सुचरित
मुष्टिंधय दुरित[1]मूर्च्छना जुष्टम् ।
संजीवयतु दये माम्
अञ्जन गिरिनाथ रञ्जनी भवती ॥ १२

576 भगवति दये भवत्या
वृषगिरि नाथे समाप्लुते तुङ्गे ।
अप्रतिघ मज्जनानां
हस्तालम्बो मदागसां मृग्यः ॥ १३

[1] मूर्च्छनादुष्टं, मूर्च्छनाविष्टं

577 कृपण जन कल्प लतिकां
कृतापराधस्य निष्क्रियामाद्याम् ।
वृषगिरि नाथ दये त्वां
विदन्ति संसार[1]तारिणीं विबुधाः ॥ १४

578 वृषगिरि गृहमेधि गुणाः
बोध बलैश्वर्य वीर्य शक्ति मुखाः ।
दोषा भवेयुरेते
यदि नाम दये त्वया विनाभूताः ॥ १५

579 आसृष्टि सन्ततानाम्
अपराधानां निरोधिनीं जगतः ।
पद्मा सहाय करुणे
प्रतिसञ्चर केलिमाचरसि ॥ १६

580 अचिदविशिष्टान् प्रलये
जन्तूनवलोक्य जात निर्वेदा ।
करण कलेबर योगं
वितरसि वृषशैल नाथ करुणे त्वम् ॥ १७

581 अनुगुण दशार्पितेन
श्रीधर करुणे समाहित स्नेहा ।
शमयसि तमः प्रजानां
शास्त्रमयेन स्थिर प्रदीपेन ॥ १८

[1] तारणीं

582 रूढा वृषाचल पतेः
पादे मुख कान्ति पत्रलच्छाया ।
करुणे सुखयसि विनतान्
कटाक्ष विटपैः करापचेय फलैः ॥ १९

583 नयने वृषाचलेन्दोः
तारा मैत्रीं दधानया करुणे ।
दृष्टस्त्वयैव जनिमान्
अपवर्गमकृष्टपच्यमनुभवति ॥ २०

584 समयोपनतैस्तव प्रवाहैः
अनुकम्पे कृत संप्लवा धरित्री ।
शरणागत[1]सस्य मालिनीयं
वृषशैलेश कृषीवलं धिनोति ॥ २१

585 कलशोदधि संपदो भवत्याः
करुणे सन्मति मन्थ संस्कृतायाः ।
अमृतांशमवैमि दिव्य देहं
मृत सञ्जीवन मञ्जनाचलेन्दोः ॥ २२

586 जलधेरिव शीतता दये त्वं
वृषशैलाधिपतेः स्वभाव भूता ।
प्रलयारभटी नटीं तदीक्षां
प्रसभं ग्राहयसि [2]प्रसत्ति लास्यम् ॥ २३

[1] सस्यशालिनीयं [2] प्रसक्तिलास्यम्

587 प्रणत प्रतिकूल मूल घाती
प्रतिघः कोऽपि वृषाचलेश्वरस्य ।
कलमे [1] यवसापचाय नीत्या
करुणे किंकरतां तवोपयाति ॥ २४

588 अबहिष्कृत निग्रहान् विदन्तः
कमलाकान्तगुणान् स्वतन्त्रतादीन् ।
अविकल्पमनुग्रहं दुहानां
भवतीमेव दये भजन्ति सन्तः ॥ २५

589 कमलानिलयस्त्वया दयालुः
करुणे निष्करुणा निरूपणे त्वम् ।
अत एव हि तावकाश्रितानां
दुरितानां भवति त्वदेव भीतिः ॥ २६

590 अतिलङ्घित शासनेष्वभीक्ष्णं
वृषशैलाधिपतिर्विजृम्भितोष्मा ।
पुनरेव दये क्षमा निदानैः
भवतीमाद्रियते भवत्यधीनैः ॥ २७

591 करुणे दुरितेषु मामकेषु
प्रतिकारान्तर दुर्जयेषु खिन्नः ।
कवचायितया त्वयैव शार्ङ्गी
विजयस्थानमुपाश्रितो वृषाद्रिम् ॥ २८

[1] यवसापचायि

597 अनुभवितुमघौघं नालमागामि कालः
प्रशमयितुमशेषं निष्क्रियाभिर्न शक्यम् ।
स्वयमिति हि दये त्वं स्वीकृत श्रीनिवासा
शिथिलित भव भीतिः श्रेयसे जायसे नः ॥ ३४

598 अवतरण विशेषैरात्म लीलापदेशैः
अवमतिमनुकम्पे मन्द चित्तेषु विन्दन् ।
वृषभ शिखरि नाथस्त्वन्निदेशेन नूनं
भजति [1]शरण भाजां भाविनो जन्म भेदान् ॥ ३५

599 परहितमनुकम्पे भावयन्त्यां भवत्यां
स्थिरमनुपधि हार्दं श्रीनिवासो दधानः ।
ललित रुचिषु लक्ष्मी भूमिनीलासु नूनं
प्रथयति बहुमानं त्वत्प्रतिच्छन्द बुद्ध्या ॥ ३६

600 वृषगिरि सविधेषु व्याजतो वास भाजां
दुरित कलुषितानां दूयमाना दये त्वम् ।
करण विलय काले कान्दिशीक स्मृतीनां
स्मरयसि बहुलीलं माधवं सावधाना ॥ ३७

601 दिशि दिशि गति विद्भिर्देशिकैर्नीयमाना
[2]स्थिरतरमनुकम्पे स्यान लग्ना गुणैस्त्वम् ।
परिगत वृषशैलं पारमारोपयन्ती
भव जलधि गतानां पोत पात्री भवित्री ॥ ३८

[1] चरणभाजां [2] स्थिरचर

602

परिमित फल सङ्गात् प्राणिनः किंपचानाः
निगम विपणि मध्ये नित्य मुक्तानुषक्तम् ।
प्रसदनमनुकम्पे प्राप्तवत्या भवत्या
वृषगिरि हरिनीलं व्यञ्जितं निर्विशन्ति ॥ ३९

603

त्वयि बहुमति हीनः श्रीनिवासानुकम्पे
जगति गतिमिहान्यां देवि संमन्यते यः ।
स खलु विबुध सिन्धौ सन्निकर्षे वहन्त्यां
शमयति मृगतृष्णा वीचिकाभिः पिपासाम् ॥ ४०

604

आज्ञां ख्यातिं धनमनुचरानाधिराज्यादिकं वा
काले दृष्ट्वा कमल वसतेरप्यकिञ्चित्कराणि ।
पद्मा कान्तं प्रणिहितवतीं पालनेऽनन्य साध्ये
साराभिज्ञा जगति कृतिनः संश्रयन्ते दये त्वाम् ॥ ४१

605

प्राजापत्य प्रभृति विभवं प्रेक्ष्य पर्याय दुःखं
जन्माकाङ्क्षन् वृषगिरि वने जग्मुषां तस्थुषां वा ।
आशासानाः कतिचन विभोस्त्वत्परिष्वङ्ग धन्यैः
अङ्गीकारं क्षणमपि दये हार्द तुङ्गैरपाङ्गैः ॥ ४२

606

नाभी पद्म स्फुरण सुभगा नव्य नीलोत्पलाभा
क्रीडा शैलं कमपि करुणे वृण्वती वेङ्कटाख्यम् ।
शीता नित्यं प्रसदनवती श्रद्धानावगाह्या
दिव्या काचिज्जयति महती दीर्घिका तावकीना ॥ ४३

607 यस्मिन् दृष्टे तदितर सुखै र्गम्यते गोष्पदत्वं
सत्यं ज्ञानं त्रिभि रवधिभि र्मुक्त मानन्द सिन्धुम् ।
त्वत्स्वीकारात् तमिह कृतिनः सूरि बृन्दानुभाव्यम्
नित्यापूर्वं निधिमिव दये निर्विशन्त्यञ्जनाद्रौ ॥ ४४

608 सारं लब्ध्वा कमपि महतः श्रीनिवासाम्बुराशेः
काले काले घन रसवती कालिकेवानुकम्पे ।
व्यक्तोन्मेषा मृगपति गिरौ विश्वमाप्याययन्ती
शीलोपज्ञं क्षरति भवती शीतलं सद्गुणौघम् ॥ ४५

609 भीमे नित्यं भव जलनिधौ मज्जतां मानवानाम्
आलम्बार्थं वृषगिरि पतिस्त्वन्निदेशात्[1] प्रयुङ्क्ते ।
प्रज्ञासारं प्रकृति महता मूल भागेन जुष्टं
शाखा भेदैः सुभगमनघं शाश्वतं शास्त्र पाणिम् ॥ ४६

610 विद्वत्सेवा कतक निकषै र्वीत पङ्काशयानां
पद्माकान्तः प्रणयति दये दर्पणं ते स्वशास्त्रम् ।
लीला दक्षां त्वदनवसरे लालयन् विप्रलिप्सां
माया शास्त्राण्यपि [2]दमयितुं त्वत्प्रपन्न प्रतीपान् ॥ ४७

611 दैवात् प्राप्ते वृषगिरि तटं देहिनि त्वन्निदानात्
स्वामिन् पाहीत्यवश वचने विन्दति स्वापमन्त्यम् ।
देवः श्रीमान् दिशति करुणे दृष्टिमिच्छंस्त्वदीयाम्
उद्घातेन श्रुति परिषदा मुत्तरेणाभिमुख्यम् ॥ ४८

[1] नियोगात्  [2] शमयितुं

612 श्रेयः सूतिं सकृदपि दये संमतां यः सखीं ते
शीतोदाराममलभत जनः श्रीनिवासस्य दृष्टिम् ।
देवादीनामयमनृणतां देहवत्त्वेऽपि विन्दन्
बन्धान्मुक्तो बलिभिरनघैः पूर्यते तत्प्रयुक्तैः ॥ ४९

613 दिव्यापाङ्गं दिशसि करुणे येषु सद्देशिकात्मा
क्षिप्रं प्राप्ता वृषगिरि पतिं क्षत्रबन्ध्वादयस्ते ।
विश्वाचार्या विधि शिव मुखाः स्वाधिकारोपरुद्धाः
मन्ये माता जड इव सुते वत्सला मादृशे त्वम् ॥ ५०

614 अतिकृपणोऽपि जन्तुरधिगम्य दये भवतीम्
अशिथिल धर्म सेतु पदवीं रुचिरामचिरात् ।
अमित महोर्मि जालमतिलङ्घ्य भवाम्बु निधिं
भवति वृषाचलेश पद पत्तन नित्य धनी ॥ ५१

615 अभिमुख भाव संपदभिसंभविनां भविनां
क्वचिदुपलक्षिता क्वचिदभङ्गुर गूढ गतिः ।
विमल रसावहा वृषगिरीश दये भवती
सपदि सरस्वतीव शमयत्यघमप्रतिघम् ॥ ५२

616 अपि करुणे जनस्य तरुणेन्दु विभूषणताम्
अपि कमलासनत्वमपि धाम वृषाद्रि पतेः ।
तरतमता वशेन तनुते ननु ते विततिः
परहित वर्ष्मणा परि पचेलिम केलिमती ॥ ५३

617 धृत भुवना दये त्रिविध गत्यनुकूलतरा
वृषगिरि नाथ पाद परिरम्भवती भवती ।
अविदित वैभवाऽपि सुर सिन्धुरिवातनुते
सकृदवगाहमान मपताप मपापमपि ॥ ५४

618 निगम समाश्रिता निखिल लोक समृद्धि करी
[1] भजदघ कूल मुद्रुज गतिः परितप्त हिता ।
प्रकटित हंस मत्स्य कमठाद्यवतार शता
विबुध सरिच्छ्रियं वृषगिरीश दये वहसि ॥ ५५

619 जगतिं मितंपचा त्वदितरा तु दये! तरला
फल नियमोज्झिता भवति संतपनाय पुनः ।
त्वमिह निरङ्कुश प्रशकनादि विभूतिमती
वितरसि देहिनां निरवधिं वृषशैल निधिम् ॥ ५६

620 सकरुण लौकिक प्रभु परिग्रह निग्रहयोः
नियतिमुपाधि चक्र परिवृत्ति परम्परया ।
वृषभ महीधरेश करुणे! निरङ्कुशतां
श्रुति मित संपदि त्वयि कथं भविता विशयः ॥ ५७

621 वृषगिरि कृष्ण मेघ जनितां जनितापहरां
त्वदभिमतिं सुवृष्टिमुपजीव्य निवृत्त तृषः ।
बहुषु जलाशयेषु बहुमानमपोह्य दये!
न जहति सत्पथं जगति चातकवत् कृतिनः ॥ ५८

[1] कूलमुद्वहगतिः

622 त्वदुदय तूलिकाभिरमुना वृषशैल जुषा
स्थिर चर शिल्पिनैव परिकल्पित चित्र धियः ।
यतिपति यामुन प्रभृतयः प्रथयन्ति दये
जगति हितं न नस्त्वयि भरन्यसनादधिकम् ॥ ५९

623 मृदुहृदये दये मृदित काम हिते महिते
धृत विबुधे बुधेषु विततात्मधुरे मधुरे ।
वृषगिरि सार्वभौम दयिते मयि ते महतीं
भवुक निधे निधेहि भवमूल हरां लहरीम् ॥ ६०

624 अकूपारैरेकोदक समय वैतण्डिक जवैः
अनिर्वाप्यां क्षिप्रं क्षपयितुमविद्याख्य बडबाम् ।
कृपे त्वं [1]तत्तादृक्प्रथिम वृष पृथ्वीधर पति-
स्वरूप द्वैगुण्य द्विगुण निज बिन्दुः [2]प्रभवसि ॥ ६१

625 विवित्सा वेताली विगम परिशुद्धेऽपि हृदये
पटु प्रत्याहार प्रभृति पुटपाक प्रचकिताः ।
नमन्तस्त्वां नारायण शिखरि कूटस्थ करुणे
निरुद्ध त्वद्द्रोहा नृपति सुत नीतिं न जहति ॥ ६२

626 अनन्याधीनः सन् भवति परतन्त्रः प्रणमतां
[3]कृपे सर्वद्रष्टा गणयति न तेषामपकृतिम् ।
पतिस्त्वत्पारार्थ्यं प्रथयति वृष क्ष्माधर पतिः
व्यवस्थां वैयात्यादिति विघटयन्ती विहरसि ॥ ६३

[1] तत्तादृक्प्रथित [2] प्रवहसि [3] दये सर्वद्रष्टा न गणयति

627 अपां पत्युः शत्रूनसहन मुनेर्धर्म निगलं
कृपे काकस्यैकं हितमिति हिनस्ति स्म नयनम् ।
विलीन स्वातन्त्र्यो वृषगिरि पतिस्त्वद्विहृतिभिः
दिशत्येवं देवो जनित सुगतिं दण्डन गतिम्[1] ॥ ६४

628 निषादानां नेता कपि कुल पतिः कापि शबरी
कुचेलः कुब्जा सा व्रज युवतयो माल्यकृदिति ।
अमीषां निम्नत्वं वृषगिरि पतेरुन्नतिमपि
प्रभूतैः स्रोतोभिः प्रसभमनुकम्पे समयसि ॥ ६५

629 त्वया दृष्टस्तुष्टिं भजति परमेष्ठी निज पदे
वहन् मूर्तीरष्टौ विहरति मृडानी परिबृढः ।
बिभर्ति स्वाराज्यं वृषशिखरि[2]शृङ्गारि करुणे
[3]शुनासीरो देवासुर समर नासीर सुभटः ॥ ६६

630 दये दुग्धोदन्वद्व्यति युत सुधा सिन्धु नयतः
त्वदाश्लेषान्नित्यं जनित मृत सञ्जीवन दशाः ।
स्वदन्ते दान्तेभ्यः श्रुति वदन कर्पूर गुलिकाः
[4]विषुणवन्तश्चित्तं वृषशिखरि विश्वंभर गुणाः ॥ ६७

631 जगज्जन्म स्थेम प्रलय रचना केलि रसिको
विमुक्त्येक द्वारं विघटित कवाटं प्रणयिनाम् ।
इति त्वय्यायत्तं द्वितयमुपधीकृत्य करुणे
विशुद्धानां वाचां वृषशिखरि नाथः स्तुति पदम् ॥ ६८

[1] विधिम् [2] शृङ्गार [3] सुनासीर [4] विसिन्वन्तः, विवृण्वन्तः

632 कलि क्षोभोन्मीलत्क्षिति कलुष कूलङ्कष जवैः
अनुच्छेदैरेतैरवट तट वैषम्य रहितैः ।
प्रवाहैस्ते पद्मा सहचरपरिष्कारिणि कृपे
[1] विकल्पन्तेऽनल्पा वृष शिखरिणो [2] निर्झरगुणाः ॥ ६९

633 खिलं चेतो वृत्तेः किमिदमिति विस्मेर भुवनं
कृपे सिंह क्ष्माभृत्कृत मुख चमत्कार करणम् ।
भरन्यास च्छन्न प्रबल वृजिन प्राभृत भृतां
प्रतिप्रस्थानं ते श्रुति नगर शृङ्गाटक जुषः ॥ ७०

634 त्रिविध चिदचित्सत्तास्थेम प्रवृत्ति नियामिका
वृषगिरि विभोरिच्छा सा त्वं परैरपराहता ।
कृपण भरभृत्किंकुर्वाण प्रभूत गुणान्तरा
वहसि करुणे वैचक्षण्यं मदीक्षण साहसे ॥ ७१

635 वृषगिरि पतेर्हृद्या विश्वावतार सहायिनी
क्षपित निखिलावद्या देवि क्षमादि निषेविता ।
भुवन जननी पुंसां भोगापवर्गविधायिनी
वितमसि पदे व्यक्तिं नित्यां बिभर्षि दये स्वयम् ॥ ७२

636 स्वयमुदयिनः सिद्धाद्याविष्कृताश्च शुभालयाः
विविध विभव व्यूहावासाः परं च पदं विभोः ।
वृषगिरि मुखेष्वेतेष्विच्छावधि प्रतिलब्धये
दृढ विनिहिता निश्रेणिस्त्वं दये निज पर्वभिः ॥ ७३

[1] विकल्प्यन्ते [2] निर्झरगणाः

637 हितमिति जगद्दृष्ट्या क्लृप्तैरक्लृप्त फलान्तरैः
अमति विहितैरन्यैर्धर्मायितैश्च यदृच्छया ।
परिणत बहुच्छद्मा पद्मासहाय दये स्वयं
प्रदिशसि निजाभिप्रेतं नः प्रशाम्यदपत्रपा ॥ ७४

638 अतिविधि शिवैरैश्वर्यात्मानुभूति रसैर्जनान्
[1]अहृदयमिहोपच्छन्द्यैषामसङ्ग दशार्थिनी ।
तृषित जनता तीर्थस्नान क्रम क्षपितैनसां
वितरसि दये वीतातङ्का वृषाद्रि पतेः पदम् ॥ ७५

639 वृषगिरि सुधा सिन्धौ जन्तुर्दये निहितस्त्वया
भव भय परीताप च्छित्त्यै भजन्नघमर्षणम् ।
मुषित कलुषो मुक्तेरग्रेसरैरभिपूर्यते
स्वयमुपनतैः स्वात्मानन्द प्रभृत्यनुबन्धिभिः ॥ ७६

640 अनितर जुषामन्तर्मूलेऽप्यपाय परिप्लवे
कृतविदनघा विच्छिद्यैषां कृपे यम वश्यताम् ।
प्रपदन फल प्रत्यादेश प्रसङ्ग विवर्जितं
[2]प्रतिविधिमुपाधत्से सार्धं वृषाद्रि हितैषिणा ॥ ७७

641 क्षणविलयिनां शास्त्रार्थानां फलाय निवेशिते
[3]सुर पितृ गणे निर्वेशात् प्रागपि प्रलयं गते ।
अधिगत वृषक्ष्माभृन्नाथामकाल वशंवदां
प्रतिभुवमिह व्याचख्युस्त्वां कृपे निरुपप्लवाम् ॥ ७८

[1] अहृदयमिहोपच्छिद्यैषां [2] प्रतिविधिमुपावत्से [3] पितृसुरगणे

642 त्वदुपसदनादद्य श्वो वा महा प्रलयेऽपि वा
वितरति निजं पादाम्भोजं वृषाचल शेखरः ।
तदिह करुणे तत्तत्क्रीडा तरङ्ग परम्परा-
तर तमतया जुष्टायास्ते दुरत्ययतां विदुः ॥ ७९

643 प्रणिहित धियां त्वत्संपृक्ते वृषाद्रि शिखामणौ
प्रसृमर सुधा धाराकारा प्रसीदति भावना ।
दृढमिति दये दत्तास्वादं [1] विमुक्ति वलाहकं
निभृत गरुतो निध्यायन्ति स्थिराशय चातकाः ॥ ८०

644 कृपे [2] विगतवेलया कृत समग्र पोषैस्त्वया
कलिज्वलन दुर्गते जगति काल मेघायितम् ।
वृष क्षिति धरादिषु स्थिति पदेषु सानुप्लवैः
वृषाद्रिपति विग्रहैर्व्यपगताखिलावग्रहैः ॥ ८१

645 प्रसूय विविधं जगत् तदभिवृद्धये त्वं दये
समीक्षण विचिन्तन प्रभृतिभिः स्वयं तादृशैः ।
विचित्र गुण चित्रितां विविध दोष वैदेशिकीं
वृषाचल पतेस्तनुं विशसि मत्स्यकूर्मादिकाम् ॥ ८२

646 युगान्त समयोचितं भजति योग निद्रारसं
वृषक्षितिभृदीश्वरे विहरण क्रमाज्जाग्रति ।
उदीर्ण चतुर्णवी कदन [3] वेदिनीं मेदिनीं
समुद्धृतवती दये [4] त्वदभिजुष्टया दंष्ट्रया ॥ ८३

[1] विभूतिवलाहकं [2] विधृतलोकया [3] वेदिनी [4] तदभिजुष्टया

647 सटा पटल भीषणे सरभसाट्टहासोद्भटे
स्फुरत्क्रुधि [1] परिस्फुरद् भ्रुकुटिकेऽपि वक्त्रे कृते ।
दये वृषगिरीशितुर्दनुज डिम्भ दत्त स्तना
सरोज सदृशा दृशा समुदिताकृतिर्दृश्यसे ॥ ८४

648 प्रसक्त मधुना विधि प्रणिहितैः सपर्योदकैः
समस्त दुरित च्छिदा निगम गन्धिना त्वं दये ।
अशेषमविशेषतस्त्रिजगदञ्जनाद्रीशितुः
चराचरमचीकरश्चरण पङ्कजेनाङ्कितम् ॥ ८५

649 परश्वथ तपोधन प्रथन सत्कृतूपाकृत-
क्षितीश्वर पशु क्षरत्क्षतज कुङ्कुम स्थासकैः ।
वृषाचल दयालुना ननु विहर्तुमालिप्यथाः
निधाय हृदये दये निहत रक्षितानां हितम् ॥ ८६

650 कृपे कृत जगद्धिते कृपण जन्तु चिन्तामणे
रमा सहचरं [2] क्षितौ रघु धुरीणयन्त्या त्वया ।
व्यभज्यत सरित्पतिः सकृदवेक्षणात् तत्क्षणात्
प्रकृष्ट बहु पातक प्रशम हेतुना सेतुना ॥ ८७

651 कृपे परवतस्त्वया वृष गिरीशितुः क्रीडितं
जगद्धितमशेषतस्तदिदमित्थमर्थाप्यते ।
मद च्छल परिच्युत प्रणत दुष्कृत प्रेक्षितैः
हत प्रबल दानवैर्हलधरस्य हेला शतैः ॥ ८८

[1] परिस्फुटद्भ्रुकुटिकेऽपि; परिस्फुटभ्रुकुटिकेऽपि [2] तदा

652 प्रभूत विबुधद्विषद्भरण खिन्न विश्वंभरा-
भरापनयन च्छलात् त्वमवतार्य लक्ष्मीधरम् ।
निराकृतवती दये निगम सौध दीप श्रिया
विपश्चिदविगीतया जगति गीतयाऽन्धं तमः ॥ ८९

653 वृषाद्रि हय सादिनः प्रबल दोर्मरुत्प्रेङ्खितः
त्विषा स्फुट तटिद्गुणस्त्वदवसेक संस्कारवान् ।
करिष्यति दये कलि प्रबल[1]घर्मनिर्मूलनः
पुनः कृत युगाङ्कुरं भुवि कृपाण धाराधरः ॥ ९०

654 विश्वोपकारमिति नाम सदा दुहानाम्
अद्यापि देवि भवतीमवधीरयन्तम् ।
नाथे निवेशय [2]वृषाद्रि पतौ दये त्वं
न्यस्त स्व रक्षण भरं त्वयि मां त्वयैव ॥ ९१

655 नैसर्गिकेण तरसा करुणे नियुक्ता
निम्नेतरेऽपि मयि ते विततिर्यदि स्यात् ।
विस्मापयेद् वृषगिरीश्वरमप्यवार्या
वेलातिलङ्घन दशेव महाम्बुराशेः ॥ ९२

656 विज्ञात शासन गतिर्विपरीत वृत्त्या
वृत्रादिभिः परिचितां पदवीं भजामि ।
एवंविधे वृषगिरीश दये मयि त्वं
दीने विभोः शमय दण्ड धरत्व लीलाम् ॥ ९३

[1] घर्मनिर्मूलनं; धर्म [2] वृषाद्रिपतेः

657 मा साहसोक्ति घन कञ्चुक वञ्चितान्यः
पश्यत्सु तेषु विदधाम्यतिसाहसानि ।
पद्मासहाय करुणे न रुणत्सि किं त्वं
घोरं कुलिङ्ग शकुनेरिव चेष्टितं मे ॥ ९४

658 विक्षेपमर्हसि दये विपलायितेऽपि
व्याजं विभाव्य वृषशैल पतेर्विहारम् ।
स्वाधीन सत्त्व सरणिः स्वयमत्र जन्तौ
द्राघीयसी दृढतरा गुण वागुरा त्वम् ॥ ९५

659 सन्तन्यमानमपराधगणं विचिन्त्य
त्रस्यामि हन्त भवतीं च विभावयामि ।
अह्नाय मे वृषगिरीश दये जहीमाम्
आशीविष ग्रहण केलि निभामवस्थाम् ॥ ९६

660 औत्सुक्य पूर्वमुपहृत्य महापराधान्
मातः प्रसादयितुमिच्छति मे मनस्त्वाम् ।
आलिह्य तान् निरवशेषमलब्ध तृप्तिः
ताम्यस्यहो वृषगिरीश धृता दये त्वम् ॥ ९७

661 जह्यात् वृषाचल पतिः प्रतिघेऽपि न त्वां
घर्मोपतप्त इव शीतलतामुदन्वान् ।
सा मामरुन्तुद भर व्यसनानुवृत्तिः
तद्वीक्षणैः स्पृश दये तव केलि पद्मैः ॥ ९८

662 दृष्टेऽपि दुर्बलधियं दमनेऽपि दृप्तं
स्नात्वाऽपि धूलिरसिकं भजनेऽपि भीमम् ।
बद्ध्वा गृहाण वृषशैल पतेर्दये मां
त्वद्वारणं स्वयमनुग्रह शृङ्खलाभिः ॥ ९९

663 नातः परं किमपि मे त्वयि नाथनीयं
मातर्दये मयि कुरुष्व तथा प्रसादम् ।
बद्धादरो वृषगिरि प्रणयी यथाऽसौ
मुक्तानुभूतिमिह दास्यति मे मुकुन्दः ॥ १००

664 निःसीम वैभव जुषां मिषतां गुणानां
स्तोतुर्दये वृषगिरीश गुणेश्वरीं त्वाम् ।
तैरेव नूनमवशैरभिनन्दितं मे
सत्यापितं तव बलादकुतो भयत्वम् ॥ १०१

665 अद्यापि तद् वृषगिरीश दये भवत्याम्
आरम्भ मात्रमनिदंप्रथम स्तुतीनाम् ।
संदर्शित स्व पर निर्वहणा सहेथाः
मन्दस्य साहसमिदं त्वयि वन्दिनो मे ॥ १०२

666 प्रायो दये त्वदनुभाव महाम्बुराशौ
प्राचेतस प्रभृतयोऽपि परं तटस्थाः ।
तत्रावतीर्णमतल स्पृशमाप्लुतं मां
पद्मापतेः प्रहसनोचितमाद्रियेथाः ॥ १०३

667 वेदान्त देशिक पदे विनिवेश्य बालं
देवो दया शतकमेतदवादयन्माम् ।
वैहारिकेण विधिना समये गृहीतं
वीणा विशेषमिव वेङ्कट शैल नाथः ॥ १०४

668 अनवधिमधिकृत्य श्रीनिवासानुकम्पाम्
अवितथ विषयत्वात् विश्वमव्रीडयन्ती ।
विविध कुशल नीवी वेङ्कटेश प्रसूता
स्तुतिरियमनवद्या शोभते सत्त्व भाजाम् ॥ १०५

669 शतकमिदमुदारं सम्यगभ्यस्यमानान्
वृषगिरिमधिरुह्य व्यक्तमालोकयन्ती ।
अनितर शरणानामाधिराज्येऽभिषिञ्चेत्
शमित विमत पक्षा शार्ङ्ग धन्वानुकम्पा ॥ १०६

670 विश्वानुग्रह मातरं व्यतिषजत्स्वर्गापवर्गां सुधा-
सध्रीचीमिति वेङ्कटेश्वर कविर्भक्त्या दयामस्तुत ।
पद्यानामिह यद्विधेय भगवत्सङ्कल्प कल्प द्रुमात्
झंझा मारुत धूत चूत नयतः सांपातिकोऽयं क्रमः ॥ १०७

671 कामं सन्तु मिथः करम्बित गुणावद्यानि पद्यानि नः
कस्यास्मिञ्छतके सदम्बु कतके दोष श्रुतिं क्षाम्यति ।
[1] निष्प्रत्यूह वृषाद्रि निर्झर[2]झरत्कार च्छलेनोच्चलन्
दीनालम्बन दिव्य दम्पति दया कल्लोल कोलाहलः ॥ १०८

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

[1] निष्प्रत्यूष [2] झरत्कारच्छलेनोच्चलद्दीना

श्रीः

# वैराग्य पञ्चकम्

—०◊◊०—

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

—०—

672 क्षोणी कोण शतांश पालन कला दुर्वार गर्वानल-
क्षुभ्यत्क्षुद्र नरेन्द्र चाटु रचना धन्यान् न मन्यामहे ।
देवं सेवितुमेव निश्चिनुमहे योऽसौ दयालुः पुरा
धाना मुष्टि मुचे कुचेल मुनये दत्ते स्म वित्तेशताम् ॥

673 सिलं किमनलं भवेदनलमौदरं बाधितुं
पयः प्रसृति पूरकं किमु न धारकं सारसम् ।
अयत्न मल मल्लकं पथि पटच्चरं कच्चरं
भजन्ति विबुधा मुधा ह्यहह कुक्षितः कुक्षितः ॥

674 ज्वलतु जलधि क्रोड क्रीडत्कृपीड भव प्रभा-
प्रतिभट पटु ज्वाला मालाकुलो जठरानलः ।
तृणमपि वयं सायं संफुल्ल मल्लि मतल्लिका
परिमलमुचा वाचा याचामहे न महीश्वरान् ॥

675 दुरीश्वर द्वार बहिर्वितर्दिका-
दुरासिकायै रचितोऽयमञ्जलिः ।
यदञ्जनाभं निरपायमस्ति मे
धनञ्जय स्यन्दन भूषणं धनम् ॥

676 शरीर पतनावधि प्रभु निषेवणापादनात्
अबिन्धन धनञ्जय प्रशमदं धनं दन्धनम् ।
धनञ्जय विवर्धनं धनमुदूढ गोवर्धनं
सुसाधनमबाधनं सुमनसां समाराधनम् ॥

677 नास्ति पित्रार्जितं किञ्चिन्न मया किञ्चिदार्जितम् ।
अस्ति मे हस्ति शैलाग्रे वस्तु पैतामहं धनम् ॥



कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

—:★०★:—

श्री :

# भगवद्ध्यान सोपानम्

—x—

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

—◇◇—

678 अन्तर्ज्योतिः किमपि यमिनामञ्जनं योगदृष्टेः
चिन्तारत्नं सुलभमिह नः सिद्धि मोक्षानुरूपम्।
दीनानाथ व्यसन शमनं दैवतं दैवतानां
दिव्यं चक्षुः श्रुति परिषदां दृश्यते रङ्ग मध्ये ॥

679 वेलातीत [1]श्रुति परिमलं वेधसां मौलि सेव्यं
प्रादुर्भूतं कनक सरितः सैकते हंस जुष्टे ।
लक्ष्मी भूम्योः कर सरसिजैर्लालितं रङ्गभर्तुः
पादाम्भोजं [2]प्रतिफलति मे भावना दीर्घिकायाम् ॥

680 चित्राकारां कटक रुचिभिश्चारु वृत्तानुपूर्वां
काले दूत्य द्रुततर गतिं कान्ति लीला कलाचीम् ।
जानु च्छाया द्विगुण सुभगां रङ्गभर्तुर्मदात्मा
जङ्घां दृष्ट्वा जनन पदवी जाङ्घिकत्वं जहाति ॥

681 कामाराम स्थिर कदलिका स्तम्भ संभावनीयं
क्षौमाश्लिष्टं किमपि कमला भूमि [3]नीलोपधानम् ।
न्यञ्चत्काञ्ची किरण रुचिरं निर्विशत्यूरु युग्मं
लावण्यौघ द्वयमिव मतिर्मामिका रङ्ग यूनः ॥

[1] श्रुत [2] फलतु [3] लीलोपधानम् [?]

682 संप्रीणाति प्रतिकलमसौ मानसं मे सुजाता
गम्भीरत्वात् क्वचन समये गूढ निक्षिप्त विश्वा ।
नालीकेन स्फुरित रजसा वेधसो निर्मिमाणा
रम्यावर्त द्युति सहचरी रङ्गनाथस्य नाभिः ॥ ५

683 श्रीवत्सेन प्रथित विभवं श्री पद न्यास धन्यं
मध्यं बाह्वोर्मणिवर रुचा रञ्जितं रङ्गधाम्नः ।
सान्द्र च्छायं तरुण तुलसी चित्रया वैजयन्त्या
सन्तापं मे [1] शमयति धियश्चन्द्रिकोदार हारम् ॥ ६

684 एकं लीलोपहितमितरं बाहुमाजानु लम्बं
प्राप्ता रङ्गे शयितुरखिल प्रार्थना पारिजातम् ।
दृप्ता सेयं दृढ नियमिता रश्मिभिर्भूषणानां
चिन्ता[2]हस्तिन्यंनुभवति मे चित्रमालान यन्त्रम् ॥ ७

685 साभिप्राय स्मित विकसितं चारु बिम्बाधरोष्ठं
दुःखापाय प्रणयिनि जने दूर दत्ताभिमुख्यम् ।
कान्तं वक्त्रं कनक तिलकालङ्कृतं रङ्ग भर्तुः
स्वान्ते गाढं [3] मम विलगति स्वागतोदार नेत्रम् ॥ ८

686 माल्यैरन्तः स्थिर परिमलैर्वल्लभा स्पर्श मान्यैः
कुप्यच्चोली वचन कुटिलैः कुन्तलैः श्लिष्ट मूले ।
रत्नापीड द्युति शबलिते रङ्गभर्तुः किरीटे
राजन्वत्यः स्थितिमधिगता वृत्तयश्चेतसो मे ॥ ९

[1] शमयतु [2] अनुभवतु [3] विलगतु मम

687 पादम्भोजं स्पृशति भजते रङ्गनाथस्य जङ्घाम् ।
उरुद्वन्द्वे विलगति शनैरूर्ध्वमभ्येति नाभिम् ।
वक्षस्यास्ते वलति भुजयोर्मामिकेयं मनीषा
वक्त्राभिख्यां पिबति वहते वासनां मौलि बन्धे ॥ १०

कान्तोदारैरयमिह भुजैः कङ्कण ज्या किणाङ्कैः
लक्ष्मी धाम्नः पृथुल परिघैर्लक्षिताभीति हेतिः ।
अग्रे किंचिद्भुजग शयनः स्वात्मनैवात्मनः सन्
मध्ये रङ्गं मम च हृदये वर्तते सावरोधः ॥ ११

रङ्गास्थाने रसिक महिते रञ्जिताशेष चित्ते
विद्वत्सेवा विमल मनसा वेङ्कटेशेन क्लृप्तम् ।
अक्लेशेन प्रणिहित धियामारुरुक्षोरवस्थां
भक्तिं गाढां दिशतु भगवद्ध्यान सोपानमेतत् ॥ १२

÷✻÷

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥



श्रीः

# श्रीस्तुतिः

—×××—

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

—·×*×·—

690 *मानातीत प्रथित विभवां मङ्गलं मङ्गलानां
वक्षः पीठीं मधु विजयिनो भूषयन्तीं स्वकान्त्या ।
प्रत्यक्षानुश्रविक महिम प्रार्थिनीनां प्रजानां
श्रेयो मूर्तिं श्रियमशरणस्त्वां शरण्यां प्रपद्ये ॥ १

691 आविर्भावः कलश जलधावध्वरे वापि यस्याः
स्थानं यस्याः सरसिज वनं विष्णु वक्षः स्थलं वा ।
भूमा यस्या भुवनमखिलं देवि दिव्यं पदं वा
स्तोक प्रज्ञैरनवधि गुणा स्तूयसे सा कथं त्वम् ॥ २

692 स्तोतव्यत्वं दिशति भवती देहिभिः स्तूयमाना
तामेव त्वामनितर गतिः स्तोतुमाशंसमानः ।
सिद्धारम्भः सकल भुवन श्लाघनीयो भवेयं
सेवापेक्षा तव चरणयोः श्रेयसे कस्य न स्यात् ॥ ३

---

*ईशानां जगतोऽस्य वेङ्कटपतेः विष्णोः परां प्रेयसीं
तद्वक्षःस्थल नित्य वास रसिकां तत्क्षान्ति संवर्धनीम् ।
पद्मालंकृत पाणि पल्लव युगां पद्मासनस्थां श्रियं
वात्सल्यादि गुणोज्ज्वलां भगवतीं वन्दे जगन्मातरम् ॥ १

केषुचित् मुद्रितपुस्तकेषु श्लोकोऽयं दृश्यते । प्राचीनतालपत्रेषु तु नास्ति । स च नाचार्याणामिति संप्रदायविदः ।

693 यत्सङ्कल्पाद्भवति कमले यत्र देहिन्यमीषां
जन्म स्थेम प्रलय रचना जङ्गमाजङ्गमानाम् ।
तत् कल्याणं किमपि यमिनामेक लक्ष्यं समाधौ
पूर्णं तेजः स्फुरति भवती पाद लाक्षा रसाङ्कम् ॥ ४

694 निष्प्रत्यूह प्रणय घटितं देवि नित्यानपायं
विष्णुस्त्वं चेत्यनवधिगुणं द्वन्द्वमन्योन्य लक्ष्यम् ।
शेषश्चित्तं विमल मनसां मौलयश्च श्रुतीनां
संपद्यन्ते विहरण विधौ यस्य शय्या विशेषाः ॥ ५

695 उद्देश्यत्वं जननि भजतोरुज्झितोपाधि गन्धं
प्रत्यग्रूपे हविषि युवयोरेक शेषित्व योगात् ।
पद्मे पत्युस्तव च निगमैर्नित्यमन्विष्यमाणो
नावच्छेदं भजति महिमा नर्तयन् मानसं नः ॥ ६

696 पश्यन्तीषु श्रुतिषु परितः सूरि बृन्देन सार्धं
मध्ये कृत्य त्रिगुण फलकं निर्मित स्थान भेदम् ।
विश्वाधीश प्रणयिनि सदा विभ्रम द्यूत वृत्तौ
ब्रह्मेशाद्या दधति युवयोरक्ष शार प्रचारम् ॥ ७

697 अस्येशाना त्वमसि जगतः संश्रयन्ती मुकुन्दं
लक्ष्मीः पद्मा जलधि तनया विष्णु पत्नीन्दिरेति ।
यन्नामानि श्रुति परिपणान्येवमावर्तयन्तो
नावर्तन्ते दुरित पवन प्रेरिते जन्म चक्रे ॥ ८

698 त्वामेवाहुः कतिचिदपरे त्वत्प्रियं लोकनाथं
किं तैरन्तः कलह मलिनैः किंचिदुत्तीर्य मग्नैः ।
त्वत्संप्रीत्यै विहरति हरौ संमुखीनां श्रुतीनां
भावारूढौ भगवति युवां दम्पती दैवतं नः ॥ ९

699 आपन्नार्ति प्रशमन विधौ बद्ध दीक्षस्य विष्णोः
आचख्युस्त्वां प्रिय सहचरीमैक मत्योपपन्नाम् ।
प्रादुर्भावैरपि सम तनुः प्राध्वमन्वीयसे त्वं
दूरोत्क्षिप्तैरिव मधुरता दुग्धराशेस्तरङ्गैः ॥ १०

700 धत्ते शोभां हरि मरकते तावकी मूर्तिराद्या
तन्वी तुङ्ग स्तन भर नता तप्त जाम्बूनदाभा ।
यस्यां गच्छन्त्युदय विलयैर्नित्यमानन्द सिन्धौ
इच्छा वेगोल्लसित लहरी विभ्रमं व्यक्तयस्ते ॥ ११

701 आसंसारं विततमखिलं वाङ्मयं यद्विभूतिः
यद्भ्रू भङ्गात् कुसुम धनुषः किंकरो मेरु धन्वा ।
यस्यां नित्यं नयन शतैरेक लक्ष्यो महेन्द्रः
पद्मे तासां परिणतिरसौ भाव लेशैस्त्वदीयैः ॥ १२

702 अग्रे भर्तुः सरसिज मये भद्र पीठे निषण्णाम्
अम्भो राशेरधिगत सुधा संप्लवादुत्थितां त्वाम् ।
पुष्पासार स्थगित भुवनैः पुष्कलावर्तकाद्यैः
क्लृप्तारम्भाः कनक कलशैरभ्यषिञ्चन् गजेन्द्राः ॥ १३

703 आलोक्य त्वाममृत सहजे विष्णु वक्षःस्थल स्थां
शापाक्रान्ताः शरणमगमन् सावरोधाः सुरेन्द्राः ।
लब्ध्वा भूयस्त्रिभुवनमिदं लक्षितं त्वत्कटाक्षैः
[1] सर्वाकार स्थिर समुदयां संपदं निर्विशन्ति ॥ १४

704 आर्त त्राण व्रतिभिरमृतासार नीलाम्बुवाहैः
अम्भोजानामुषसि मिषतामन्तरङ्गैरपाङ्गैः ।
यस्यां यस्यां दिशि विहरते देवि दृष्टिस्त्वदीया
तस्यां तस्यामहमहमिकां तन्वते संपदोघाः ॥ १५

705 योगारम्भ त्वरित मनसो युष्मदैकान्त्य युक्तं
धर्मं प्राप्तुं प्रथममिह ये धारयन्ते धनायाम् ।
तेषां भूमेर्धनपति गृहादम्बरादम्बुधेर्वा
धारा निर्यान्त्यधिकमधिकं वाञ्छितानां वसूनाम् ॥ १६

706 श्रेयस्कामाः कमलनिलये चित्रमाम्नाय वाचां
चूडापीडं तव पद युगं चेतसा धारयन्तः ।
छत्र च्छाया सुभग शिरसश्चामर स्मेर पार्श्वाः
[2] श्लाघाशब्द श्रवण मुदिताः स्रग्विणः सञ्चरन्ति ॥ १७

707 ऊरीकर्तुं कुशलमखिलं जेतुमादीनरातीन्
दूरीकर्तुं दुरित निवहं त्यक्तुमाद्यामविद्याम् ।
अम्ब स्तम्बावधिक जनन ग्राम सीमान्त रेखाम्
आलम्बन्ते विमल मनसो विष्णु कान्ते दयां ते ॥ १८

[1] सर्वाकारस्थितिसमुदयां [2] श्लाघाघोष

708 जाताकाङ्क्षा जननि युवयोरेक सेवाधिकारे
मायालीढं विभवमखिलं मन्यमानास्तृणाय ।
प्रीत्यै विष्णोस्तव च कृतिनः प्रीतिमन्तो भजन्ते
वेलाभङ्ग प्रशमन फलं वैदिकं धर्मसेतुम् ॥ १९

709 सेवे देवि त्रिदश महिला मौलि मालार्चितं ते
सिद्धि क्षेत्रं शमित विपदां संपदां पाद पद्मम् ।
यस्मिन्नीषन्नमित शिरसो यापयित्वा शरीरं
वर्तिष्यन्ते वितमसि पदे वासुदेवस्य धन्याः ॥ २०

710 सानुप्रास प्रकटित दयैः सान्द्र वात्सल्य दिग्धैः
अम्ब स्निग्धैरमृत लहरी लब्ध सब्रह्मचर्यैः ।
घर्मे ताप त्रय विरचिते गाढ तप्तं क्षणं माम्
आकिञ्चन्य ग्लपितमनघैरार्द्रयेथाः[1] कटाक्षैः ॥ २१

711 संपद्यन्ते भव भय तमी [2]भानवस्त्वत्प्रसादात्
भावाः सर्वे भगवति हरौ भक्तिमुद्वेलयन्तः ।
याचे किं [3]त्वामहमिह यतः शीतलोदार शीला
भूयो भूयो दिशसि महतां मङ्गलानां प्रबन्धान् ॥ २२

712 माता देवि त्वमसि भगवान् वासुदेवः पिता मे
जातः सोऽहं जननि युवयोरेकलक्ष्यं दयायाः ।
दत्तो युष्मत्परिजनतया देशिकैस्त्वं
किं ते भूयः प्रियमिति किल स्मेर वक्त्रा विभासि ॥ २३

[1] आद्रियेथाः [2] भास्वतः [3]त्वामहमतिभयः; शीतलोदारशीलां

713 कल्याणानामविकल निधिः काऽपि कारुण्य सीमा
नित्यामोदा निगम वचसां मौलि मन्दार माला ।
संपद् दिव्या मधु विजयिनः सन्निधत्तां सदा मे
सैषा देवी सकल भुवन प्रार्थना कामधेनुः ॥

714 उपचित गुरु भक्तेरुत्थितं वेङ्कटेशात्
कलि कलुष निवृत्त्यै कल्पमानं प्रजानाम् ।
सरसिज निलयायाः स्तोत्रमेतत् पठन्तः
[1] सकल कुशल सीमा सार्वभौमा भवन्ति ॥



कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥



[1] सकलकुशलसीमाः

श्री :

# भूस्तुतिः

—×—

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

—✧✧—

715 सङ्कल्प कल्प लतिकामवधिं क्षमायाः
[1] स्वेच्छा वराह महिषीं सुलभानुकम्पाम् ।
विश्वस्य मातरमकिंचन कामधेनुं
विश्वंभरामशरणः शरणं प्रपद्ये ॥ १

716 [2] त्वं व्याहृतिः प्रथमतः प्रणवः प्रियस्ते[3]
संवेदयत्यखिल मन्त्र गणस्तमेव ।
इत्थं प्रतीत विभवा[illegible]
स्तोतुं [4] यथावदवने क इवार्हति त्वाम् ॥ २

717 नित्यं हिताहित विपर्यय बद्ध भावे
त्वद्वीक्षणैक विनिवर्त्य बहु व्यपाये ।
मुग्धाक्षरैरखिल धारिणि मोदमाना
मातः स्तनन्धय धियं मयि वर्तयेथाः ॥ ३

718 सङ्कल्प किंकर चराचर चक्रवालं
सर्वातिशायिनमनन्त शयस्य पुंसः ।
भूमानमात्म विभवैः पुनरुक्तयन्ती
वाचामभूमिरपि भूमिरसि त्वमेका ॥ ४

[1] मायावराह [2] त्वां [3] प्रियं ते [4] यथावदचले

719 वेधस्तृणावधि विहार परिच्छदं ते
विश्वं चराचरतया व्यतिभिद्यमानम् ।
अम्ब [1]त्वदाश्रिततया परिपोषयन्ती
विश्वंभरस्य दयिताऽसि तदेक नामा ॥

720 सर्वंसहेत्यवनिरित्यचलेति मातः
विश्वंभरेति विपुलेति वसुन्धरेति ।
अन्यानि [2]चान्यविमुखान्यभिधान वृत्त्या
नामान्यमूनि कथयन्ति तवानुभावम् ॥

721 तापान् क्षिपन् प्रसविता सुमनो गणानां
प्रच्छाय [3]शीतल तलः प्रदिशन् फलानि ।
त्वत्सङ्गमात् भवति माधवि लब्ध पोषः
शाखा शतैरधिगतो हरि चन्दनोऽसौ ॥

722 स्मेरेण वर्धित रसस्य मुखेन्दुना ते
निस्पन्दतां विजहतो निजया प्रकृत्या ।
विश्रान्ति भूमिरसि तत्त्व तरङ्ग पङ्क्तेः
वेलेव विष्णु जलधेरपृथग्भवन्ती ॥

723 स्वाभाविके वसुमति श्रुतिभिर्विभाव्ये
पत्युर्महिम्नि भवतीं प्रतिपन्न वासाम् ।
शङ्के विमान वहन प्रतिमा समानाः
स्तम्बेरम प्रभृतयोऽपि वहन्ति सत्त्वाः ॥

[1] त्वमाश्रित [2] यान्यभिमुखानि [3] शीतलतरः

724 संभावयन् मधुरिपुः प्रणयानुरोधात्
वक्षःस्थलेन वरुणालय राजकन्याम् ।
विश्वंभरे बहुमुख प्रतिपन्न भोगः
[1]शेषात्मना तु भवतीं शिरसा दधाति ॥ १०

725 क्रीडा वराह दयिते कृतिनः क्षितीन्द्राः
संक्रन्दनस्तदितरेऽपि दिशामधीशाः ।
आमोदयन्ति [2]भुवनान्यलिकाश्रितानाम्
अम्ब त्वदङ्घ्रि रजसां परिणाम भेदैः ॥ ११

726 भूतेषु यत् त्वदभिमान विशेष पात्रं
पोषं तदेव भजतीति विभावयन्तः ।
भूतं प्रभूत[3]गुण पञ्चकमाद्यमेव
प्रायो निदर्शनतया प्रतिपादयन्ति ॥ १२

727 कान्तस्तवैष करुणा जलधिः प्रजानाम्
आज्ञातिलङ्घन वशादुपजात रोषः ।
अह्नाय विश्व जननि क्षमया भवत्या
सर्वावगाहन सहामुपयात्यवस्थाम् ॥ १३

728 आश्वासनाय जगतां पुरुषे परस्मिन्
आपन्न रक्षण दशामभिनेतुकामे ।
अन्तर्हितेतर गुणादबला स्वभावात्
औदन्वते पयसि मज्जनमभ्यनैषीः ॥ १४

[1] शेषात्मनाऽपि [2] भुवनान्यलका [3] गुणपञ्चकमाद्यमेतत्

729 पूर्वं वराह वपुषा पुरुषोत्तमेन
प्रीतेन भोगि सदने समुदीक्षितायाः ।
पादाहताः प्रलय वारिधयस्तवासन्
उद्वाह मङ्गल विधेरुचिता मृदङ्गाः ॥

730 व्योमातिलङ्घिनि विभोः प्रलयाम्बु राशौ
वेशन्त लेश इव मातुमशक्य मूर्तेः ।
सद्यः समुद्र वसने सरसैरकार्षीः
आनन्द सागरमपारमपाङ्ग पातैः ॥

731 दंष्ट्रा विदारित महासुर शोणिताङ्कैः
अङ्कैः प्रियस्तव दधे परिरम्भ लीलाम् ।
सा ते पयोधि जल केलि समुत्थितायाः
सैरन्ध्रिकेव विदधे नवमङ्गरागम् ॥

732 अन्योन्य संवलन जृम्भित तूर्य घोषैः
संवर्त सिन्धु सलिलैर्विहिताभिषेका ।
एकातपत्रयसि विश्वमिदं गुणैः स्वैः
अध्यास्य भर्तुरधिकोन्नतमंस पीठम् ॥

733 [1] भर्तुस्तमाल रुचिरे भुज मध्य भागे
पर्याय मौक्तिकवती पृषतैः पयोधेः ।
तापानुबन्ध शमनी जगतां त्रयाणां
तारापथे स्फुरसि तारकिता निशेव ॥

[1] पत्युस्तमाल

734 आसक्त वासव शरासन पल्लवैस्त्वां
संवृद्धये शुभ तटिद्गुण जाल रम्यैः ।
देवेश दिव्य महिषीं धृत सिन्धु तोयैः
जीमूत रत्न कलशैरभिषिञ्चति द्यौः ॥ २०

735 आविर्मदैरमर दन्तिभिरुह्यमानां
रत्नाकरेण रुचिरां रशना गुणेन ।
मातस्त्रिलोक जननीं वन मालिनीं त्वां
माया वराह महिषीमवयन्ति सन्तः ॥ २१

736 [1] निष्कण्टक प्रशम योग निषेवणीयां[2]
छाया विशेष परिभूत[3]समस्त तापाम् ।
स्वर्गापवर्गसरणिं भवतीमुशन्ति
स्वच्छन्द सूकर[4]वधूमवधूत पङ्काम् ॥ २२

737 गण्डोज्ज्वलां गहन कुन्तल दर्शनीयां
शैलस्तनीं तरल निर्झर लम्ब हाराम् ।
श्यामां स्वतस्त्रियुग सूकर गेहिनि त्वं
व्यक्तिं समुद्र वसनामुभयीं बिभर्षि ॥ २३

738 निःसंशयैर्निगम सीमनि विष्णुपत्नि
प्रख्यापितं भृगु मुखैर्मुनिभिः प्रतीतैः ।
पश्यन्त्यनन्य [5] पर धी रस संस्तुतेन
सन्तः समाधि नयनेन तवानुभावम् ॥ २४

[1] निष्कण्टकेन विभवेन [2] विशेषणीयां [3] विपन्निदाघां
[4] बधूमवधूतपङ्काः; वधूँ नवपङ्कजाक्षाम् [5] परधी रससंश्रितेन; परिशीलनसंस्कृतेन

739 संचोदिता करुणया चतुरः पुमर्थान्
व्यातन्वती विविध मन्त्र गणोपगीता ।
संचिन्त्यसे वसुमति स्थिर भक्ति बन्धैः
अन्तर्बहिश्च बहुधा प्रणिधान दक्षैः ॥ २५

740 क्रीडा गृहीत कमलादि विशेष चिह्नां
विश्राणिताभय [1]वरां वसुधे [2]सभूतिम् ।
दौर्गत्य दुर्विष विनाश सुधा नदीं त्वां
संचिन्तयन् हि लभते [3]धनदाधिकारान् ॥ २६

741 उद्वेल कल्मष[4]परम्परितादमर्षात्
उत्तंसितेन [5]हरिमञ्जलिनाऽप्यधृष्यम् ।
आकस्मिकोऽयमधिगम्ययति प्रजानाम्
अम्ब त्वदीय करुणा परिणाम एव ॥ २७

742 प्रत्येकमब्द [6]नियुतैरपि दुर्व्यपोहात्
प्राप्ते विपाकसमये जनितानुतापात् ।
[7]नित्यापराध निवहाच्चकितस्य जन्तोः
गन्तुं मुकुन्द चरणौ शरणं [8]क्षमे त्वम् ॥ २८

743 त्राणाभिसंधि[9]सुभगेऽपि सदा मुकुन्दे
संसार तन्त्र वहनेन विलम्बमाने ।
रक्षा विधौ तनुभृतामनघानुकम्पा
मातः स्वयं वितनुषे महतीमपेक्षाम् ॥ २९

[1] करां [2] सुभूमिं; स्वतन्त्रे [3] धनदाधिकारम् [4] परंपरितादमुष्मात् [5] हरिमञ्जलिनाऽप्रधृष्यं
[6] निवहैरपि [7] गाढापराध [8] क्षमा त्वम् [9] सुलभेऽपि; विमुखेऽपि

744
धर्मं द्रुहं सकल दुष्कृति सार्वभौमम्
आत्मानभिज्ञमनुतापलवोज्झितं माम् ।
वैतान सूकरपतेश्चरणारविन्दे
सर्वंसहे ननु समर्पयितुं क्षमा त्वम् ॥ ३०

745
ताप त्रयीं निरवधिं भवती दयार्द्राः
संसार घर्म जनितां सपदि क्षिपन्तः ।
मातर्भजन्तु मधुरामृत वर्ष मैत्रीं
माया वराह दयिते मयि ते कटाक्षाः ॥ ३१

746
पत्युर्दक्षिण पाणि पङ्कज पुटे [1] विन्यस्त पादाम्बुजा
वामं पन्नग सार्वभौम सदृशं पर्यङ्कयन्ती भुजम् ।
पोत्र स्पर्श लसत्कपोल फलका फुल्लारविन्देक्षणा
सा मे पुष्यतु मङ्गलान्यनुदिनं सर्वाणि सर्वंसहा ॥ ३२

747
'अस्येशाना जगत' इति या श्रूयते विष्णुपत्नी
तस्याः स्तोत्रं विरचितमिदं वेङ्कटेशेन भक्त्या ।
श्रद्धा भक्ति प्रचय गुरुणा चेतसा संस्तुवानो
[2] यद्यत्कामः सपदि लभते तत्र तत्र प्रतिष्ठाम् ॥ ३३



कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥



[1] विन्यस्य पादाम्बुजं [2] यद्यत्काम्यं

श्रीः

# गोदास्तुतिः

—×××—

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

—·×*×·—

748 श्रीविष्णुचित्त कुल नन्दन कल्पवल्लीं
श्रीरङ्गराज हरिचन्दन योग दृश्याम् ।
साक्षात् क्षमां करुणया कमलामिवान्यां
गोदामनन्यशरणः शरणं प्रपद्ये ॥ १

749 वैदेशिकः श्रुति गिरामपि भूयसीनां
वर्णेषु माति महिमा न हि मादृशां ते ।
इत्थं विदन्तमपि मां सहसैव गोदे
मौन द्रुहो मुखरयन्ति गुणास्त्वदीयाः ॥ २

750 त्वत्प्रेयसः श्रवणयोरमृतायमानां
तुल्यां त्वदीय मणि नूपुर शिञ्जितानाम् ।
गोदे त्वमेव जननि त्वदभिष्टवार्हां
वाचं प्रसन्न मधुरां मम संविधेयाः[1] ॥ ३

751 कृष्णान्वयेन दधतीं यमुनानुभावं
तीर्थैर्यथावदवगाह्य सरस्वतीं ते ।
गोदे विकस्वर धियां भवती कटाक्षात्
वाचः स्फुरन्ति मकरन्द मुचः कवीनाम् ॥ ४

[1] संविधेहि

752 अस्मादृशामपकृतौ चिर दीक्षितानां
अह्नाय देवि दयते यदसौ मुकुन्दः ।
तन्निश्चितं नियमितस्तव मौलि दाम्ना
तन्त्री निनाद[1]मधुरैश्च गिरां निगुम्भैः ॥ ५

753 शोणाऽधरेऽपि कुचयोरपि तुङ्गभद्रा
वाचां प्रवाह[2]निवहेऽपि सरस्वती त्वम् ।
अप्राकृतैरपि रसैर्विरजा स्वभावात्
गोदाऽपि देवि कमितुर्ननु नर्मदाऽसि ॥ ६

754 वल्मीकतः श्रवणतो वसुधात्मनस्ते
जातो बभूव स मुनिः कवि सार्वभौमः ।
गोदे किमद्भुतमिदं यदमी स्वदन्ते
वक्त्रारविन्द मकरन्द निभाः प्रबन्धाः ॥ ७

755 भोक्तुं तव प्रियतमं भवतीव गोदे
भक्तिं निजां प्रणय भावनया गृणन्तः ।
उच्चावचैर्विरह संगमजैरुदन्तैः
शृङ्गारयन्ति हृदयं गुरवस्त्वदीयाः ॥ ८

756 मातः समुत्थितवतीमधि विष्णुचित्तं
विश्वोपजीव्यममृतं वचसा दुहानाम् ।
तापच्छिदं हिम रुचेरिव मूर्तिमन्यां
सन्तः पयोधि दुहितुः सहजां विदुस्त्वाम् ॥ ९

[1] सुभगैश्च [2] विभवेऽपि

757 तातस्तु ते मधुभिदः स्तुति लेश वश्यात्
कर्णामृतैः स्तुति शतैरनवाप्त पूर्वम् ।
त्वन्मौलि गन्ध सुभगामुपहृत्य मालां
लेभे महत्तर पदानुगुणं प्रसादम् ॥ १०

758 दिक् दक्षिणाऽपि परि पक्त्रिम पुण्य लभ्यात्
सर्वोत्तरा भवति देवि तवावतारात् ।
यत्रैव रङ्गपतिना बहुमान पूर्वं
निद्रालुनापि नियतं निहिताः कटाक्षाः ॥ ११

759 प्रायेण देवि भवती व्यपदेश योगात्
गोदावरी जगदिदं पयसा पुनीते ।
यस्यां समेत्य समयेषु चिरं निवासात्
भागीरथी प्रभृतयोऽपि भवन्ति पुण्याः ॥ १२

760 नागे शयः सुतनु पक्षिरथः कथं ते
जातः स्वयंवर पतिः पुरुषः पुराणः ।
एवं विधाः समुचितं प्रणयं भवत्याः
संदर्शयन्ति परिहास गिरः सखीनाम् ॥ १३

761 त्वद्भुक्त माल्य सुरभीकृत चारु मौलेः
[1]हित्वा भुजान्तर गतामपि वैजयन्तीम् ।
पत्युस्तवेश्वरि मिथः प्रतिघात लोलाः
बर्हातपत्र रुचिमारचयन्ति भृङ्गाः ॥ १४

[1] त्यक्त्वा

762 आमोदवत्यपि सदा हृदयं गमाऽपि
रागान्विताऽपि ललिताऽपि गुणोत्तराऽपि ।
मौलि स्रजा तव मुकुन्द किरीट भाजा
गोदे भवत्यधरिता खलु वैजयन्ती ॥ १५

763 त्वन्मौलि दामनि विभोः शिरसा गृहीते
स्वच्छन्द[1]कल्पित सपीति रस प्रमोदाः ।
मञ्जु स्वना मधु लिहो विदधुः स्वयं ते
स्वायंवरं [2]कमपि मङ्गल तूर्य घोषम् ॥ १६

764 विश्वायमान रजसा कमलेन नाभौ
वक्षःस्थले च कमला स्तन चन्दनेन ।
[3]आमोदितोऽपि निगमैर्विभुरङ्घ्रि युग्मे
धत्ते नतेन शिरसा तव मौलि मालाम् ॥ १७

765 चूडा पदेन परिगृह्य तवोत्तरीयं
मालामपि त्वदलकैरधिवास्य दत्ताम् ।
प्रायेण रङ्गपतिरेष बिभर्ति गोदे
सौभाग्य संपदभिषेक महाधिकारम् ॥ १८

766 तुङ्गैरकृत्रिम गिरः स्वयमुत्तमाङ्गैः
यं सर्वगन्ध इति सादरमुद्वहन्ति ।
आमोदमन्यमधिगच्छति मालिकाभिः
सोऽपि त्वदीय कुटिलालक वासिताभिः ॥ १९

[1] कल्पितनिपीतरसाः प्रमोदात्   [2] किमपि   [3] आमोदितेऽपि

767 धन्ये समस्त जगतां पितुरुत्तमाङ्गे
त्वन्मौलि[1]माल्य भर संभरणेन भूयः ।
इन्दीवर स्रजमिवादधति त्वदीयानि
आकेकराणि बहुमान विलोकितानि ॥ २०

768 रङ्गेश्वरस्य तव च [2]प्रणयानुबन्धात्
अन्योन्य माल्य परिवृत्तिमभिष्टुवन्तः ।
वाचालयन्ति वसुधे रसिकास्त्रिलोकीं
न्यूनाधिकत्व समता विषयैर्विवादैः ॥ २१

769 दूर्वा दल प्रतिमया तव [3]देह कान्त्या
[4]गोरोचना रुचिरया च रुचेन्दिरायाः ।
आसीदनुज्झित शिखावल कण्ठ शोभं
माङ्गल्यदं प्रणमतां मधुवैरि गात्रम् ॥ २२

770 अर्च्यं समर्च्य नियमैर्निगम प्रसूनैः
नाथं त्वया कमलया च समेयिवांसम् ।
मातश्चिरं निरविशन् निजमाधिराज्यं
[5]मान्या मनु प्रभृतयोऽपि महीक्षितस्ते ॥ २३

771 आर्द्रापराधिनि जनेऽप्यभिरक्षणार्थं
रङ्गेश्वरस्य रमया विनिवेद्यमाने ।
पार्श्वे परत्र भवती यदि तत्र [6]नासीत्
प्रायेण देवि वदनं परिवर्तितं स्यात् ॥ २४

[1] माल्यभरसंवरणेन [2] प्रणयानुरोधात् [3] देवि कान्त्या [4] गोरोचनारचनया च तथेन्दिरायाः [5] मान्यं [6] न स्यात्

772 गोदे गुणैरपनयन् प्रणतापराधान्
भ्रूक्षेप [1]एव तव भोग रसानुकूलः ।
[2]कर्मानुबन्धि फल दान रतस्य भर्तुः
स्वातन्त्र्य[3]दुर्व्यसन मर्म भिदा निदानम् ॥ २५

773 रङ्गे तटिद्गुणवतो रमयैव गोदे
कृष्णाम्बुदस्य घटितां कृपया सुवृष्ट्या ।
दौर्गत्य दुर्विष विनाश सुधा नदीं त्वां
सन्तःप्रपद्य शमयन्त्यचिरेण तापान् ॥ २६

774 जातापराधमपि [4]मामनुकम्प्य गोदे
गोप्त्री यदि त्वमसि युक्तमिदं भवत्याः ।
वात्सल्य निर्भरतया जननी कुमारं
स्तन्येन वर्धयति दष्ट पयोधराऽपि ॥ २७

775 शतमख मणि नीला चारु कल्हार हस्ता
स्तन भर नमिताङ्गी सान्द्र वात्सल्य सिन्धुः ।
अलक विनिहिताभिः स्रग्भिराकृष्ट नाथा
विलसतु हृदि गोदा विष्णुचित्तात्मजा नः ॥ २८

776 इति विकसित भक्तेरुत्थितां वेङ्कटेशात्
बहुगुण रमणीयां वक्ति गोदास्तुतिं यः ।
स भवति बहुमान्यः श्रीमतो रङ्गभर्तुः
चरण कमल सेवां शाश्वतीमभ्युपैष्यन् ॥ २९

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

[1] एष [2] कर्मानुबन्ध; कर्मानुबद्ध [3] दुर्विषह [4] मां सहसैव

श्रीः

# दशावतारस्तोत्रम्

—xxx—

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

—·x*x·—

777 देवो नः शुभमातनोतु दशधा निर्वर्तयन् भूमिकां
रङ्गे धामनि लब्ध निर्भर रसैरध्यक्षितो भावुकैः ।
यद्भावेषु पृथग्विधेष्वनुगुणान् भावान् स्वयं बिभ्रती
यद्धर्मैरिह धर्मिणी विहरते नानाकृतिर्नायिका ॥ १

778 निर्मग्न श्रुति जाल मार्गण दशा दत्त क्षणैर्वीक्षणैः
अन्तस्तन्वदिवारविन्द गहनान्यौदन्वतीनामपाम् ।
निष्प्रत्यूह तरङ्ग रिङ्गण मिथः प्रत्यूढ पाथश्छटा-
डोलारोह सदोहलं भगवतो मात्स्यं वपुः पातु नः ॥ २

779 अव्यासुर्भुवन त्रयीमनिभृतं कण्डूयनैरद्रिणा
निद्राणस्य परस्य कूर्म वपुषो निश्वास वातोर्मयः ।
[1] यद्विक्षेपण संस्कृतो दधिपयः प्रेङ्खोलपर्यङ्किका-
नित्यारोहण निर्वृतो विहरते देवः सहैव श्रिया ॥ ३

780 गोपायेदनिशं जगन्ति कुहना पोत्री पवित्री कृत-
ब्रह्माण्डः प्रलयोर्मि घोष गुरुभिर्घोणा रवैर्घुर्घुरैः ।
यद्दंष्ट्राङ्कुर कोटि गाढ घटना निष्कम्प नित्य स्थितिः
ब्रह्म स्तम्बमसौदसौ भगवती मुस्तेव विश्वंभरा ॥ ४

[1] यद्विक्षेपविसंस्थुलो

781 प्रत्यादिष्ट पुरातन प्रहरण ग्रामः क्षणं पाणिजैः
अव्यात् त्रीणि जगन्त्यकुण्ठ महिमा वैकुण्ठ कण्ठीरवः ।
यत्प्रादुर्भवनादवन्ध्य जठरा यादृच्छिकाद् वेधसां
या काचित् सहसा महासुर गृह स्थूणा पितामह्यभूत् ॥ ५

782 व्रीडा विद्ध वदान्य दानव यशो नासीर धाटी भटः
त्रैयक्षं मकुटं पुनन्नवतु नस्त्रैविक्रमो विक्रमः ।
यत्प्रस्ताव समुच्छ्रित ध्वज पटी वृत्तान्त सिद्धान्तिभिः
स्रोतोभिः सुरसिन्धुरष्टसु दिशा सौधेषु दोधूयते ॥ ६

783 क्रोधाग्निं जमदग्नि पीडन भवं संतर्पयिष्यन् क्रमात्
अक्षत्रामपि सन्ततक्ष य इमां त्रिःसप्त कृत्वः क्षितिम् ।
दत्त्वा कर्माणि दक्षिणां क्वचन तामास्कन्द्य सिन्धुं वसन्
अब्रह्मण्यमपाकरो( ) भगवानाब्रह्म कीटं मुनिः ॥ ७

784 पारावार पयो विशोषण कला पारीण कालानल-
ज्वाला जाल विहार हारि विशिख व्यापार घोर क्रमः ।
सर्वावस्थ सकृत्प्रपन्न जनता संरक्षणैक व्रती
धर्मो विग्रहवानधर्म विरतिं धन्वी स तन्वीत नः ॥ ८

785 फक्कत्कौरव [1]पट्टण प्रभृतयः प्रास्त प्रलम्बादयः
तालाङ्कस्य तथाविधा विहृतयस्तन्वन्तु भद्राणि नः ।
क्षीरं शर्करयेव याभिरपृथग्भूताः प्रभूतैर्गुणैः
आकौमारकमस्वदन्त जगते कृष्णस्य ताः केलयः ॥ ९

[1] पत्तन

786 नाथायैव नमःपदं भवतु नश्चित्रैश्चरित्र क्रमैः
भूयोभिर्भुवनान्यमूनि कुहना गोपाय गोपायते ।
कालिन्दी रसिकाय कालिय फणि स्फार स्फटा वाटिका-
रङ्गोत्सङ्ग विशङ्क चंक्रम धुरा पर्याय चर्या यते ॥ १०

787 भाविन्या दशया भवन्निह भव ध्वंसाय नः कल्पतां
कल्की विष्णुयशस्सुतः कलि कथा कालुष्य कूलंकषः ।
निःशेष क्षत कण्टके क्षितितले धारा जलौघैर्ध्रुवं
धर्मं कार्तयुगं प्ररोहयति यन्निस्त्रिंश धाराधरः ॥ ११

788 इच्छा मीन विहार कच्छप महा पोत्रिन् यदृच्छा हरे
रक्षा वामन रोष राम करुणा काकुत्स्थ हेला हलिन् ।
क्रीडा वल्लव [1] कल्क वाहन दशा कल्किन्निति प्रत्यहं
जल्पन्तः पुरुषाः पुनन्ति भुवनं पुण्यौघ पण्यापणाः ॥ १२

789 विद्योदन्वति वेङ्कटेश्वरकवौ जातं जगन्मङ्गलं
देवेशस्य दशावतार विषयं स्तोत्रं विवक्षेत यः ।
वक्त्रे तस्य सरस्वती बहु मुखी भक्तिः परा मानसे
शुद्धिः कापि तनौ दिशासु दशसु ख्यातिः शुभा जृम्भते ॥ १३



कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥



[1] कल्कवाहनदशाकल्पिन्निति

श्रीः

# यतिराज सप्ततिः

—०❖०—

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

—०—

790 कमप्याद्यं गुरुं वन्दे कमला गृहमेधिनम् ।
प्रवक्ता च्छन्दसां वक्ता पञ्चरात्रस्य यः स्वयम् ॥ १

791 सह धर्मचरीं शौरेः संमन्त्रित जगद्धिताम् ।
अनुग्रहमयीं वन्दे नित्यमज्ञात निग्रहाम् ॥ २

792 वन्दे वैकुण्ठ सेनान्यं देवं सूत्रवती सखम् ।
यद्वेत्र शिखर स्पन्दे विश्वमेतद् व्यवस्थितम् ॥ ३

793 यस्य [1] सारस्वत स्रोतो वकुलामोद वासितम् ।
श्रुतीनां विश्रमायालं शठारिं तमुपास्महे ॥ ४

794 नाथेन मुनिना [2] तेन भवेयं नाथवानहम् ।
यस्य नैगमिकं तत्त्वं हस्तामलकतां गतम् ॥ ५

795 नमस्याम्यरविन्दाक्षं नाथ भावे व्यवस्थितम् ।
शुद्धसत्त्व मयं शौरेरवतारमिवापरम् ॥ ६

[1] सारस्वतं स्रोतो [2] मुनिनाथेन

796 अनुज्झित क्षमा योगमपुण्यजन बाधकम् ।
[1]अस्पृष्ट मदरागं तं रामं तुर्यमुपास्महे ॥ ७

797 विगाहे यामुनं तीर्थं साधु बृन्दावने स्थितम् ।
निरस्त जिह्मग स्पर्शे यत्र कृष्णः कृतादरः ॥ ८

798 दया निघ्नं यतीन्द्रस्य देशिकं पूर्णमाश्रये ।
येन विश्व सृजो विष्णोरपूर्यत मनोरथः ॥ ९

799 प्रणामं लक्ष्मणमुनिः प्रतिगृह्णातु मामकम् ।
प्रसाधयति यत्सूक्तिः स्वाधीन पतिकां श्रुतिम् ॥ १०

800 उपवीतिनमूर्ध्व पुण्ड्रवन्तं
त्रिजगत्पुण्य फलं त्रिदण्ड हस्तम् ।
शरणागत सार्थवाहमीडे
शिखया शेखरिणं पतिं यतीनाम् ॥ ११

801 प्रथयन् विमतेषु तीक्ष्ण भावं
प्रभुरस्मत्परिरक्षणे यतीन्द्रः ।
अपृथक्प्रतिपन्न यन्मयत्वैः
ववृधे पञ्चभिरायुधैर्मुरारेः ॥ १२

802 शमितोदय शङ्करादि गर्वः
स्वबलादुद्धृत यादवप्रकाशः ।
अवरोपितवान् श्रुतेरपार्थान्
ननु रामावरजः स [2]एष भूयः ॥ १३

[1] अस्पृष्टमदिरा गन्ध [2] एव

803 अबहुश्रुत संभवं श्रुतीनां
जरतीनामयथायथ प्रचारम् ।
विनिवर्तयितुं यतीश्वरोक्तिः
विदधे ताः स्थिरनीति पञ्जर स्थाः ॥ १४

804 अमुना तपनातिशायि भूम्ना
यतिराजेन निबद्ध नायक श्रीः ।
महती गुरु पङ्क्ति हार यष्टिः
विबुधानां हृदयङ्गमा विभाति ॥ १५

805 अलून पक्षस्य यति क्षमाभृतो
विभाति वंशे हरितत्त्वमक्षतम् ।
यदुद्भवाः शुद्ध सुवृत्त शीतलाः
भवन्ति मुक्तावलि भूषणं भुवः ॥ १६

806 अनपाय विष्णुपद संश्रयं भजे
कलया कयाऽपि कलयाऽप्यनुज्झितम् ।
[1]अकलङ्क योगमजडाशयोदयं
यतिराज चन्द्रमुपराग दूरगम् ॥ १७

807 अभिगम्य सम्यगनघाः सुमेधसो
यति चक्रवर्ति पद पद्म पत्तनम् ।
हरि भक्त दास्य रसिकाः परस्परं
क्रय विक्रयार्ह दशया समिन्धते ॥ १८

[1] अकलङ्कयोगमजडाशयोदितं

808 परुषातिवाद परिवाद पैशुन-
प्रभृति प्रभूत पतनीय पङ्किला ।
स्वदते ममाद्य सुभगा सरस्वती
यतिराज कीर्ति कतकैर्विशोधिता ॥ १९

809 अनुकल्प भूत मुरभित्पदं सतां
अजहत्त्रिवर्गमपवर्ग वैभवम् ।
चल चित्त वृत्ति विनिवर्तनौषधं
शरणं यतीन्द्र चरणं वृणीमहे ॥ २०

810 श्वसितावधूत परवादि वैभवाः
निगमान्त नीति जलधेस्तल स्पृशः ।
प्रतिपादयन्ति गतिमापवर्गिकीं
यति सार्वभौम पदसात्कृताशयाः ॥ २१

811 मूले निविश्य महतां निगम द्रुमाणां
मुष्णन् प्रतारक भयं धृत नैकदण्डः ।
रङ्गेश भक्तजन मानस राजहंसो
रामानुजः शरणमस्तु मुनिः स्वयं नः ॥ २२

812 सन्मन्त्रवित् क्षिपति संयमिनां नरेन्द्रः
संसार जिह्मग मुखैः समुपस्थितं नः ।
विष्वक् ततं विषय लोभ विषं निजाभिः
गाढानुभाव गरुडध्वज भावनाभिः ॥ २३

813 नाथः स एष यमिनां नख रश्मि जालैः
अन्तर्निलीनमपनीय तमो मदीयम् ।
विज्ञान चित्रमनघं लिखतीव चित्ते
व्याख्यान केलि रसिकेन कराम्बुजेन ॥ २४

814 उद्गृह्णतीमुपनिषत्सु निगूढमर्थं
चित्ते निवेशयितुमल्प धियां स्वयं नः ।
पश्येम लक्ष्मण मुनेः प्रातिपन्न हस्ताम्
उन्निद्र [1]पद्म सुभगामुपदेश मुद्राम् ॥ २५

815 आकर्षणानि निगमान्त सरस्वतीनां
उच्चाटनानि बहिरन्तरुपप्लवानाम् ।
पथ्यानि घोर भव संज्वर पीडितानां
हृद्यानि भान्ति यतिराज मुनेर्वचांसि ॥ २६

816 शीत स्वभाव सुभगानुभवः शिखावान्
दोषावमर्द नियतोन्नतिरोषधीशः ।
तापानुबन्ध शमनस्तपनः प्रजानां
रामानुजो जयति संवलित त्रिधामा ॥ २७

817 जयति सकल विद्या वाहिनी जन्म शैलो
जनि पथ परिवृत्ति श्रान्त विश्रान्ति शाखी ।
निखिल कुमति माया शर्वरी बाल सूर्यो
निगम जलधि वेला पूर्ण चन्द्रो यतीन्द्रः ॥ २८

[1] सत्त्व

818 मुनि बहुमत सारा मुक्ति निश्रेणिकेयं
सहृदय हृदयानां शाश्वती दिष्ट सिद्धिः ।
[1]शमित दुरित गन्धा संयमीन्द्रस्य सूक्तिः
परिचित गहना नः प्रस्नुवीत प्रसादम् ॥ २९

819 भव मरु परिखिन्न स्फीत पानीय [2]सिन्धुः
दुरित रहित जिह्वा दुग्ध कुल्या सकुल्या ।
श्रुति नयन सनाभिः शोभते लक्ष्मणोक्तिः
नरक मथन सेवास्वाद नाडिंधमा नः ॥ ३०

820 हरिपद मकरन्द स्यन्दिनः संश्रितानां
अनुगत बहुशाखास्तापमुन्मूलयान्ति ।
शमित दुरित गन्धाः संयमीन्द्र प्रबन्धाः
कथक जन मनीषा कल्पना कल्पवृक्षाः ॥ ३१

821 नानाभूतैर्जगति समयैर्नर्म लीलां विधित्सोः
अन्त्यं वर्णं प्रथयति विभोरादिम व्यूह [3]भेदे ।
विश्वं त्रातुं विषय नियतं व्यञ्जितानुग्रहः सन्
विष्वक्सेनो यतिपतिरभूद् वेत्रसारस्त्रिदण्डः ॥ ३२

822 लक्ष्यं बुद्धे रसिक रसना लास्य लीला निदानं
शुद्धास्वादं किमपि जगति श्रोत्र दिव्यौषधं नः ।
लक्ष्यालक्ष्यैः सित जलधिवद्भाति तात्पर्य रत्नैः
लक्ष्मीकान्त स्फटिक मुकुरो लक्ष्मणार्योपदेशः ॥ ३३

[1] शमित विमत खेदा [2] सिद्धिः [3] भेदैः

823 स्थितिमवधीरयन्त्यतिमनोरथ सिद्धिमतीं
यतिपति संप्रदाय निरपाय धनोपचिताः ।
मधुकर मौलि दघ्न मद दन्तुर दन्ति घटा-
करट कटाह वाहि घन शीकर [1]शीभरिताम् ॥ ३४

824 निरुपधि रङ्गवृति रसिकानभिताण्डवयन्
निगम विमर्श केलि [2]रसिकैर्निभृतैर्विधृतः ।
गुण परिणद्ध सूक्ति दृढ कोण विघट्टनया
रटति दिशा मुखेषु यतिराज यशः पटहः ॥ ३५

825 इदं प्रथम संभवत्कुमति जाल कूलङ्कषाः
मृषा मत विषानल ज्वलित जीव जीवातवः ।
क्षरन्त्यमृतमक्षरं यति पुरन्दरस्योक्तयः
चिरन्तन सरस्वती चिकुर बन्ध सैरन्ध्रिकाः ॥ ३६

826 सुधाशन सुदुर्ग्रह श्रुति समष्टि मुष्टिन्धयः
कथाहवमसौ गतान् कपट सौगतान् खण्डयन् ।
मुनिर्मनसि लक्ष्मणो मुदमुदञ्चयत्यञ्जसा
मुकुन्द गुण मौक्तिक प्रकर शुक्तिभिः सूक्तिभिः ॥ ३७

827 कपर्दि मत कर्दमं कापिल कल्पना वागुरां
दुरत्ययमतीत्य तद् द्रुहिण तन्त्र यन्त्रोदरम् ।
कुदृष्टि कुहना मुखे निपततः पर ब्रह्मणः
कर ग्रह विचक्षणो जयति लक्ष्मणोऽयं मुनिः ॥ ३८

[1] शीफरिताम् [2] निरतैः

828 कणाद् परिपाटिभिः कपिल कल्पना नाटकैः
कुमारिल कुभाषितैर्गुरु निबन्धन ग्रन्थिभिः ।
तथागत कथाशतैस्तदनुसारि जल्पैरपि
प्रतारितामिदं जगत् प्रगुणितं यतीन्द्रोक्तिभिः ॥ ३९

829 कथा कलह कौतुक ग्रह गृहीत कौतस्कुत–
प्रथा जलधि संप्लव ग्रसन कुम्भ सम्भूतयः ।
जयन्ति सुधियो [1]यति क्षितिभृदन्तिकोपासना–
प्रभाव परिपक्त्रिम प्रमिति भारती संपदः ॥ ४०

830 यतीश्वर सरस्वती सुरभिताशयानां सतां
वहामि चरणाम्बुजं प्रणति शालिना मौलिना ।
तदन्य मत दुर्मद ज्वलित चेतसां वादिनां
शिरस्सु निहितं मया पदमदक्षिणं लक्ष्यताम् ॥ ४१

831 भजस्व यतिभूपतेरनिदमादि दुर्वासना-
कदध्व परिवर्तन श्रम निवर्तनीं वर्तनीम् ।
लभस्व हृदय स्वयं रथ पदायुधानुग्रह-
द्रुत प्रहृति निस्त्रुटद्दुरित दुर्वृतिं निर्वृतिम् ॥ ४२

832 कुमति विहित ग्रन्थ ग्रन्थि प्रभूत मतान्तर-
ग्रहिल मनसः पश्यन्त्वल्पां यतीश्वर भारतीम् ।
विकट मुरभिद्वक्षः पीठी परिष्करणोचितः
कुल गिरि तुलारोहे भावी कियानिव कौस्तुभः ॥ ४३

[1] यतिक्षितिभृदन्तिकोपासनप्रभाव

833 स्थविर निगम स्तोम स्थेयां यतीश्वर भारतीं
कुमति फणिति क्षोभ क्षीबाः क्षिपन्तु भजन्तु वा ।
रस परिमल श्लाघा घोष स्फुटत्पुट भेदनं
लवण वणिजः [1]कर्पूरार्घं किमित्यभिमन्वते ॥ ४४

834 वहति महिलामाद्यो वेधास्त्रयी मुखरैर्मुखैः
वर तनुतया वामो भागः शिवस्य विवर्तते ।
तदपि परमं तत्त्वं गोपी जनस्य वशंवदं
मदन कदनैर्न क्लिश्यन्ते यतीश्वर संश्रयाः ॥ ४५

835 निगम पथिक च्छाया शाखी निराश महानिधिः
महित विविध च्छात्र श्रेणी मनोरथ सारथिः ।
त्रिभुवन तमःप्रत्यूषोऽयं त्रिविद्य शिखामणिः
प्रथयति यति क्ष्माभृत्पारावरीमविपर्ययाम् ॥ ४६

836 जड मति मुधा दन्ता दन्ति व्यथौषध सिद्धयः
प्रमिति निधयः प्रज्ञा शालि प्रपालन यष्टयः ।
श्रुति सुरभयः शुद्धानन्दाभिवर्षुक वारिदाः
यम गति कथा विच्छेदिन्यो यतीश्वर सूक्तयः ॥ ४७

837 प्रतिकलमिह प्रत्यक्तत्त्वावलोकन दीपिकाः
यति परिबृढ ग्रन्थाश्चिन्तां निरन्तरयन्ति नः ।
[2]अकलुष परज्ञानौत्सुक्य क्षुधातुर दुर्दशा-
परिणत फल प्रत्यासीदत्फलेग्रहि सुग्रहाः ॥ ४८

[1] कर्पूरोद्घम्   [2] अकलुषपरिज्ञान

838 मुकुन्दाङ्घ्रि श्रद्धा कुमुद वन चन्द्रातप निभाः
मुमुक्षामक्षोभ्यां ददति मुनि बृन्दारकगिरः ।
स्व सिद्धान्त ध्वान्त स्थिर कुतुक दुर्वादि परिषद्-
दिवाभीत प्रेक्षा दिनकर समुत्थान परुषाः ॥ ४९

839 निराबाधा बोधायन [1]भणिति निष्यन्द सुभगाः
विशुद्धोपन्यास व्यतिभिदुर शारीरक नयाः ।
अकुण्ठैः कल्पन्ते यतिपति निबन्धा निज मुखैः
अनिद्राण प्रज्ञा रस धमनि वेधाय सुधियाम् ॥ ५०

840 विकल्पाटोपेन श्रुतिपथमशेषं विघटयन्
यदृच्छानिर्दिष्टे यति नृपति शब्दे विरमति ।
वितण्डाहंकुर्वत्प्रतिकथक वेतण्ड पृतना-
वियात व्यापार व्यतिमथन संरम्भ कलहः ॥ ५१

841 प्रतिष्ठा तर्काणां प्रतिपदमृचां धाम यजुषां
परिष्कारः साम्नां परिपणमथर्वाङ्गिरसयोः ।
प्रदीपस्तत्त्वानां प्रतिकृतिरसौ तापस गिरां
प्रसत्तिं संवित्तेः [2]प्रदिशति यतीशान फणितिः ॥ ५२

842 हतावद्ये हृद्ये हरि चरण पङ्केरुह युगे
निबध्नन्त्यैकान्त्यं किमपि यति भूभृत्फणितयः ।
शुनासीर स्कन्द द्रुहिण हर हेरम्ब हुतभुक्-
प्रभेशादि क्षुद्र प्रणति परिहार प्रतिभुवः ॥ ५३

[1] फणिति [2] प्रदिशतु

843 यथाभूत स्वार्था यति नृपति सूक्तिर्विजयते
सुधा संदोहाब्धिः सुचरित विपक्तिः श्रुतिमताम् ।
कथा दृप्यत्कौतस्कुत कलह कोलाहल हत-
त्रिवेदी निर्वेद प्रशमन विनोद प्रणयिनी ॥ ५४

844 श्रुति श्रेणी चूडापद बहुमते लक्ष्मण मते
स्व पक्षस्थान् दोषान् वितथ मतिरारोपयति यः ।
स्व हस्तेनोत्क्षिप्तैः स खलु निज गात्रेषु बहुलं
गलद्भिर्जम्बालैर्गगन तलमालिम्पति जडः ॥ ५५

845 निरालोके लोके निरुपधि पर स्नेह भरितो
यति क्ष्माभृद्दीपो यदि न किल जाज्वल्यत इह ।
अहंकार ध्वान्तं विजहति कथंकारमनघाः
कुतर्क व्यालौघं कुमति मत पाताल कुहरम् ॥ ५६

846 यति क्ष्माभृद्दृष्टं मतमिह नवीनं तदपि किं
ततः प्रागेवान्यद्वद तदपि किं वर्ण निकषे ।
निशाम्यन्तां यद्वा [1]निजमति तिरस्कार विगमात्
निरातङ्काष्टङ्क द्रमिड गुहदेव प्रभृतयः ॥ ५७

847 सुधासारं श्रीमद्यतिवर भुवः श्रोत्र कुहरे
निषिञ्चन्ति न्यञ्चन्निगम गरिमाणः फणितयः ।
यदास्वादाभ्यास प्रचय महिमोल्लासित धियां
सदास्वाद्यं काले तदमृतमनन्तं सुमनसाम् ॥ ५८

[1] निजमत

848 यति क्षोणीभर्तुर्यदिदमनिदं भोग जनता-
शिरः श्रेणीजुष्टं [1]तदिह [2]दृढबन्धं प्रभवति ।
अविद्यारण्यानी कुहर विहरन्मामक मनः-
प्रमाद्यन्मातङ्ग प्रथम निगलं पाद युगलम् ॥ ५९

849 सवित्री मुक्तानां सकल जगदेनः प्रशमनी
गरीयोभिस्तीर्थैरुपाचित रसा यामुन मुखैः ।
[3]निरुच्छेदा निम्नेतरमपि समाप्लावयति मां
यदृच्छा विक्षेपाद् यतिपति दया दिव्य तटिनी ॥ ६०

850 चिन्ताशेष दुरर्थ दन्तुर वचः कन्था शत ग्रन्थिलाः
सिद्धान्ता न समिन्धते यतिवर ग्रन्थानु संधायिनि ।
मुक्ता शुक्ति विशुद्ध सिद्ध तटिनी चूडाल चूडापदः
किं कुल्यां कलयेत खण्ड परशुर्मण्डूक मञ्जूषिकाम् ॥ ६१

851 वन्दे तं यमिनां धुरन्धरमहं मानान्धकार द्रुहा
पन्थानं परिपन्थिनां निज दृशा रुन्धानमिन्धानया ।
दत्तं येन दया सुधाम्बुनिधिना पीत्वा विशुद्धं पथः
काले नः करिशैल कृष्ण जलदः काङ्क्षाधिकं वर्षति ॥ ६२

852 काषायेण गृहीत पीत वसना दण्डैस्त्रिभिर्मण्डिता
सा मूर्तिर्मुरमर्दनस्य जयति त्रय्यन्त संरक्षिणी ।
यत्प्रख्यापित तीर्थ वर्धित धियामभ्यस्यतां यद्गुणान्
आ सिन्धोरनिदं प्रदेश नियता कीर्तिः प्रजागर्ति नः ॥ ६३

[1] मनसि [2] दृढबद्धं प्रभवतु [3] दुरुच्छेदा

853. लिप्से लक्ष्मण योगिनः पदयुगं रथ्या पराग च्छटा-
रक्षारोपण धन्य सूरि परिषत्सीमन्त सीमान्तिकम् ।
भिक्षा पर्यटन क्षणेषु बिभरांचक्रे गलत्किल्बिषा
यद्विन्यास मिषेण [1]पत्र मकरी मुद्रां समुद्राम्बरा ॥ ६४

854 नाना तन्त्र विलोभितेन मनसा निर्णीत दुर्नीतिभिः
कष्टं कुत्सित दृष्टिभिर्यतिपतेरादेश वैदेशिकैः ।
व्यासो हासपदी कृतः परिहृतः प्राचेतसश्चेतसः
क्लृप्तः केलि शुकः शुकः स च [2]मुधा बाधाय बोधायनः ॥ ६५

855 अर्थ्या तिष्ठति मामिका मतिरसावाजन्म राजन्वती
पत्या संयमिनामनेन जगतामत्याहित च्छेदिना ।
यत्सारस्वत दुग्ध सागर सुधा सिद्धौषधास्वादिनां
प्रस्वापाय न बोभवीति भगवन्माया महायामिनी ॥ ६६

856 शुद्धादेश वशंवदीकृत यति क्षोणीश वाणीशता-
प्रत्यादिष्ट बहिर्गतिः श्रुति शिरः प्रासादमासीदति ।
दुग्धोदन्वदपत्य सन्निधि सदा सामोद दामोदर-
श्लक्ष्णालोकन दौर्ललित्य ललितोन्मेषा मनीषा मम ॥ ६७

857 आस्तां नाम यतीन्द्र पद्धति जुषामाजान शुद्धा मतिः
तच्चाव्याज विदग्ध मुग्ध मधुरं सारस्वतं शाश्वतम् ।
को वा चक्षुरुदञ्चयेदपि पुरः साटोप तर्कच्छटा
शस्त्राशस्त्रि विहार संभृत रणास्वादेषु वादेषु नः ॥ ६८

[1] पत्रमकरीमुद्रां [2] मुधाबोधाय

858 पर्यासं पर्यचैषं कणचरण कथामाक्षपादं शिशिक्षे
मीमांसा मांसलात्मा समजनिषि मुहुः सांख्य योगौ समाख्यम् ।
इत्थं तैस्तैर्यतीन्द्र त्रुटित बहुमृषा तन्त्र कान्तार पान्थैः
अन्तर्मोह क्षपान्धैरहह किमिह नश्चिन्तनीयं तनीयः ॥ ६९

859 [1]गाथा ताथागतानां गलति गमनिका कापिली क्वाऽपि लीना
क्षीणा काणाद वाणी द्रुहिण हर गिरः सौरभं नारभन्ते ।
क्षामा कौमारिलोक्तिर्जगति गुरुमतं गौरवात् दूरवान्तं
का शङ्का शङ्करादेर्भजति यतिपतौ भद्र वेदीं त्रिवेदीम् ॥ ७०

860 विष्वग्व्यापिन्यगाधे यतिनृपति यशःसंपदेकार्णवेऽस्मिन्
श्रद्धा शुद्धावगाहैः शुभमतिभिरसौ वेङ्कटेशोऽभिषिक्तः ।
प्रज्ञादौर्जन्य गर्जत्प्रतिकथक वचस्तूल वातूल वृत्त्या
सप्तत्या सारवत्या समतनुत सतां प्रीतिमेतां समेताम् ॥ ७१

861 आशा मतङ्गज गणानविषह्य वेगान्
पादे यति क्षितिभृतः प्रसभं निरुन्धन् ।
कार्यः कथाहव कुतूहलिभिः परेषां
कर्णे स एष कवितार्किक सिंहनादः ॥ ७२

862 उपशमित कुदृष्टि विप्लवानाम्
उ[illegible]चार दीपिकेयम् ।
कबलित भगवद्विभूति युग्मां
दिशतु मतिं यतिराज सप्ततिर्नः ॥ ७३

[1] गाथा

863 करतलामलकीकृत [1]सत्पथाः
श्रुतिवतंसित सूनृत सूक्तयः ।
दिवस तारकयन्ति समत्सरान्
यति पुरन्दर सप्तति सादराः ॥ ७४



कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥



[1] सत्कथाः

श्रीः

# न्यासतिलकम्

◊◊◊◊

श्रीमान् वेङ्कटनाथायः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

864 [1]गुरुभ्यस्तद्गुरुभ्यश्च नमोवाकमधीमहे ।
वृणीमहे च तत्राद्यौ दंपती जगतां पती ॥ १

865 प्रायः प्रपदने पुंसां पौनःपुन्यं निवारयन् ।
हस्तः श्रीरङ्ग भर्तुर्माम् अव्यादभय मुद्रितः ॥ २

866 अनादेर्निःसीम्नो दुरित जलधेर्यन्निरुपमं
विदुः प्रायश्चित्तं यदु रघु धुरीणाशय विदः ।
तदारम्भे तस्या गिरमवदधानेन मनसा
प्रपद्ये तामेकां श्रियमखिल नाथस्य महिषीम् ॥ ३

867 महेन्द्राग्ना विष्णु प्रभृतिषु महत्त्व प्रभृतिवत्
प्रपत्तव्ये तत्त्वे परिणमित वैशिष्ट्य विभवाम् ।
अधृष्यत्वं धृत्वा कमितुरभिगम्यत्व जननीं
श्रियं शीतापाङ्गामहमशरणो यामि शरणम् ॥ ४

868 स्वतः सिद्धः श्रीमानमित गुण भूमा करुणया
विधाय ब्रह्मादीन् वितरति निजादेशमपि यः ।
प्रपत्त्या साक्षाद् वा भजन शिरसा वाऽपि सुलभं
मुमुक्षुर्देवेशं तमहमधिगच्छामि शरणम् ॥ ५

[1] इदं पद्यं प्राचीनेषु तालपत्रकोशेषु केषुचन न दृश्यते

869 बृन्दानि यः स्व वशयन् व्रज सुन्दरीणां
बृन्दा वनान्तर भुवां सुलभो बभूव ।
श्रीमानशेष जन संग्रहणाय शेते
रङ्गे भुजङ्ग शयने स महा भुजङ्गः ॥ ६

870 रङ्गास्तीर्ण भुजङ्ग पुङ्गव वपुः पर्यङ्कवर्यं गतौ
सर्गं स्थित्यवसान केलि रसिकौ तौ दंपती नः पती ।
नाभी पङ्कज शायिनः श्रुति सुखैरन्योन्य बद्ध स्मितौ
डिम्भस्याम्बुज संभवस्य वचनैरोंतत्सदित्यादिभिः ॥ ७

871 घन करुणा रसौघ भरितां परिताप हरां
नयन महश्छटां मयि तरङ्गय रङ्गपते ।
दुरित हुताशन स्फुरित दुर्दम दुःख मषी-
मलिनित विश्व सौध दुरपह्नव वर्ण सुधाम् ॥ ८

872 दुर्मोचोद्भट कर्म कोटि निबिडोऽप्यादेश वश्यः कृतो
बाह्यैर्नैव विमोहितोऽस्मि कुदृशां पक्षैर्न विक्षोभितः ।
यो माहानसिको महान् यतिपतेर्नीतश्च तत्पौत्रजान्
आचार्यानिति रङ्गधुर्य मयि ते स्वल्पावशिष्टो भरः ॥ ९

873 आर्तेष्वाशुफला तदन्य विषयेऽप्युच्छिन्न देहान्तरा
वह्न्यादेरनपेक्षणात् तनुभृतां सत्यादिवद् व्यापिनी ।
श्रीरङ्गेश्वर यावदात्म नियत त्वत्पारतन्त्र्योचिता
त्वय्येव त्वदुपाय धीरपिहित स्वोपाय भावाऽस्तु मे ॥ १०

874 त्वय्याचार्यैर्विनिहित भरास्तावका रङ्गनाथ
त्वत्कैङ्कर्य प्रवण मनसस्त्वद्गुणास्वाद मत्ताः ।
त्वय्येकस्मिन्नपि विजहतो मुक्तवत् साधनत्वं
त्वच्छेषत्व स्वरस रसिकाः सूरयो मे स्वदन्ताम् ॥ ११

875 कल्प स्तोमेऽप्यपास्त त्वदितर [1]गतयोऽशक्ति धी भक्ति भूम्ना
रङ्गेश प्रातिकूल्य [2]क्षरण परिणमन्निर्विघातानुकूल्याः ।
त्रातारं त्वामभेद्याच्छरण वरणतो नाथ निर्विघ्नयन्तः
त्वन्निक्षिप्तात्म [3]रक्षां प्रति रभस जुषः स्व प्रवृत्तिं त्यजन्ति ॥ १२

876 [4]त्यक्तोपाय व्यपायांस्तदुभय करणे सत्रपान् सानुतापान्
भूयोऽपि त्वत्प्रपत्त्या प्रशमित कलुषान् हन्त सर्वंसहस्त्वम् ।
रङ्गिन् न्यासान्तरङ्गाखिल जन हितता गोचर [5]त्वन्निदेश-
प्रीति प्राप्त स्ववर्णाश्रम शुभ चरितान् पासि धन्यान् अनन्यान् ॥ १३

877 शोकास्पदांश मथनः श्रयतां भवाब्धौ
रागास्पदांश सहजं न रुणत्सि दुःखम् ।
नो चेदमी जगति रङ्ग धुरीण भूयः
क्षोदिष्ठ भोग रसिकास्तव न स्मरेयुः ॥ १४

878 हेतुर्वैधे विमर्शे भजनवदितरत् किं त्वनुष्ठान काले
वेद्य त्वद्रूप भेदो विविध इह स तूपायतान्यानपेक्षा ।
रङ्गिन् प्रारब्ध भङ्गात् [6]फलमधिकमनावृत्तिरुक्तेष्टिवत् स्यात्
नाना शब्दादि भेदात् प्रपदन भजने सूचिते सूत्र कारैः १५

[1]गतयः शक्ति [2] क्षपण [3] रक्षाः [4] त्यक्त्वोपायव्यपायान्
[5] त्वन्निदेशात् [6] फलमधिकमनावृत्तिरुक्तेष्टिवत्तत्

879 भक्तौ रङ्गपते यथा खलु पशु च्छागादिवत् वेदन-
ध्यानोपासन दर्शनादि वचसामिच्छन्त्यभिन्नार्थताम् ।
व्यक्त्यैक्याच्छरणागति प्रपदन त्यागात्म निक्षेपण-
न्यासाद्येषु तथैव तन्त्र निपुणैः पर्यायता स्मर्यते ॥ १६

880 विश्वासायास भूम्ना[1] न्यसन भजनयोर्गौरवे को विशेषः
तत्सद्भावेऽपि धर्मान्तर इव घटते कर्तृभेदाद् विकल्पः ।
तद्भेदो रङ्गशायिन्ननितर गतिताद्युत्थ शोकातिरेकात्
सद्विद्यादौ विकल्पस्त्वभिमति भिदया तेन तत्रैकराश्यम् ॥ १७

881 ध्रुवमधिकृति भेदात् कर्मवत् रङ्गशायिन्[2]
फलति फलमनेकं त्वत्पदे भक्तिरेका ।
शरण वरण वाणी सर्व हेतुस्तथाऽसौ
कृपण भजन निष्ठा बुद्धि दौर्बल्य काष्ठा ॥ १८

882 कर्तव्यं सकृदेव हन्त कलुषं सर्वं ततो नश्यति
ब्रह्मेशादि सुदुर्लभं पदमपि प्राप्यं मया द्रागिति ।
[3] विश्वास प्रतिबन्धिचिन्तनमिदं पर्यसस्यति न्यस्यतां
रङ्गाधीश रमापतित्व सुभगं नारायणत्वं तव ॥ १९

883 धी कर्म भक्ति रहितस्य कदाऽप्यशक्त्या
रङ्गेश भाव कलुष प्रणति द्वयोक्तेः ।
मन्ये बलं प्रबल दुष्कृत शालिनो मे
त्वन्मूल देशिक कटाक्ष निपातमाद्यम् ॥ २०

[1] भूम्नोर्न्यसन [2] वासिन् [3] विश्वासप्रतिबन्धचिन्तनमिदं

884 अन्धोऽनन्ध ग्रहण वशगो याति रङ्गेश यद्वत्
पङ्गुर्नौका कुहर निहितो नीयते नाविकेन ।
भुङ्क्ते भोगानविदित नृपः सेवकस्यार्भकादिः
त्वत्संप्राप्तौ प्रभवति तथा देशिको मे दयालुः ॥ २१

885 [1]उक्त्वा धनञ्जय विभीषण लक्ष्यया ते
प्रत्याय्य लक्ष्मण मुनेर्भवता वितीर्णम् ।
श्रुत्वा वरं तदनुबन्ध मदावलिप्ते
नित्यं प्रसीद भगवन् मयि रङ्गनाथ ॥ २२

886 सकृदपि विनतानां सर्वदे सर्वदेहिनि
उपनिषदभिधेये भागधेये विधेये ।
विरमति न कदाचिन्मोहतो हा हतोऽहं
विषम विषय चिन्ता मेदुरा मे दुराशा ॥ २३

887 यावज्जीवं जगति [2]नियता देह यात्रा भवित्री
त्यक्ताः सर्वे त्रिचतुर दिन ग्लान भोगा नभोगाः ।
दत्ते रङ्गी निजमपि पदं देशिकादेश काङ्क्षी
किं ते चिन्ते परमभिमतं खिद्यसे यत् पुनस्त्वम् ॥ २४

888 अपि मुहुरपराधैरप्रकम्प्यानुकम्पे
वहति महति योग क्षेम बृन्दं मुकुन्दे ।
मद कलुष मनीषा वज्र लेपावलेपान्
अनुगुणयितुमीहे न प्रभूनप्रभूतान् ॥ २५

[1] उक्त्या [2] नियतं

889 मातर्भारति मुञ्च मानुष चटून् हे देह लब्धैरलं
लुब्ध द्वार दुरासिका परिभवैस्तोषं जुषेथा मनः ।
[1]वाचः सीमनि रङ्ग धामनि महानन्दोन्नमद्भूमनि
स्वामिन्यात्मनि [2]वेङ्कटेश्वर कवेः स्वेनार्पितोऽयं भरः ॥ २६

890 दास्यं [3]लास्यवताऽनुमत्य मनसा रङ्गेश्वर त्वत्पदे
नित्यं किं करवाण्यहं न तु पुनः कुर्यां [4]कदर्याश्रयाम् ।
मीलच्चक्षुषि वेल्लित भ्रुणि मुहुर्दत्तावमानाक्षरे
भीमे कस्यचिदाढ्यकस्य वदने भिक्षाविलक्षां दृशम् ॥ २७

891 त्वय्येकाञ्जलि किंकरे तनुभृतां निर्व्याज सर्वंसहे
कल्याणात्मनि रङ्गनाथ कमला कान्ते मुकुन्दे स्थिते ।
स्वामिन् पाहि दयस्व [5]देव कुशलिन् जीव प्रभो भावयेति
आलापानवलेपिषु प्रलपितुं जिह्रेति जिह्वा मम ॥ २८

892 त्वयि सति रङ्गधुर्य शरणागत कामदुघे
[6]निरुपधिक प्रवाह करुणा परिणाहवति ।
परिमित देश काल फलदान् फलदाकृतिकान्
कथमधिकुर्महे विधि शिव प्रमुखानमुकान् ॥ २९

893 ओमित्यभ्युपगम्य रङ्गनृपतेऽनन्योचितां [7] शेषतां
स्वातन्त्र्यादिमयीमपोह्य [8] महतीमाद्यामविद्यास्थितिम् ।
नित्यासंख्य विसीम [9]भूति गुणयोर्यायामनायासतः
सेवा संपदमिन्दिरेश युवयोरैकान्तिकात्यन्तिकीम् ॥ ३०

[1] वाचां सीमनि; वाचा सीमनि [2] वेङ्कटेश्वरगुरोः [3] लास्यवताऽनुसृत्य [4] कदर्याश्रयम्
[5] देहि कुशलं [6] निरवधिक [7] नान्योचितां [8] मयीम् व्यपोह्य [9] भूम

894 आचार्यात् रङ्गधुर्य द्वय समधिगमे लब्धसत्तं[1] तदात्वे
विश्लिष्टाश्लिष्ट पूर्वोत्तर दुरित भरं यापितारब्ध देहम् ।
नीतं त्वत्कैस्त्वया वा निरवधिक दयोद्भूत बोधादिरूपं
त्वद्भोगैक[2] स्वभोगं दयितमनुचरं त्वत्कृते मां कुरुष्व ॥ ३१

895 विधानं रङ्गेशादधिगतवतो वेङ्कट कवेः
स्फुरद्वर्णं वक्त्रे परिकलयतां न्यास तिलकम् ।
इहामुत्राप्येष प्रणत जन चिन्तामणि गिरिः
स्व पर्यङ्के सेवां दिशति फणि पर्यङ्क रसिकः ॥ ३२

—=०=—

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥



[1] सत्त्वं [2] स्वभावं

# न्यासविंशतिः



श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥



896 सिद्धं सत्संप्रदाये स्थिर धियमनघं श्रोत्रियं ब्रह्म निष्ठं

सत्त्वस्थं सत्य वाचं समय नियतया साधु वृत्त्या समेतम् ।

डम्भासूयादि मुक्तं जित विषय गणं दीर्घ बन्धुं दयालुं

स्खालित्ये शासितारं स्व पर हितपरं देशिकं भूष्णुरीप्सेत् ॥ १

897 अज्ञान ध्वान्त रोधादघ परिहरणादात्म साम्यावहत्वात्

जन्म प्रध्वंसि जन्म प्रद गरिमतया *दिव्य दृष्टि प्रभावात् ।

निष्प्रत्यूहानृशंस्यान्नियत रसतया नित्य शेषित्व योगात्

आचार्यः सद्भिरप्रत्युपकरण धिया देववत् स्यादुपास्यः ॥ २

901 सानुक्रोशे समर्थे प्रपदनमृषिभिः स्मर्यतेऽभीष्ट सिद्ध्यै
लोकेऽप्येतत् प्रसिद्धं न च विमतिरिह प्रेक्ष्यते क्वाऽपि तन्त्रे ।
तस्मात् कैमुत्य सिद्धं भगवति तु भरन्यास विद्यानुभावं
धर्म स्थेयाश्च पूर्वे स्वकृतिषु बहुधा स्थापयांचक्रुरेवम् ॥ ६

902 शास्त्र प्रामाण्य वेदी ननु विधि विषये निर्विशङ्कोऽधिकारी
विश्वासस्याङ्गभावे पुनरिह विदुषा किं महत्त्वं प्रसाध्यम् ।
मैवं घोरापराधैः सपदि गुरुफले न्यासमात्रेण लभ्ये
शङ्का पार्ष्णि ग्रहार्हा शमयितुमुचिता हेतुभिस्तत्तदर्हैः ॥ ७

903 नेहाभिक्रान्ति नाशो न च विमतिरिह प्रत्यवायो भवेदिति
उक्तं कैमुत्यनीत्या प्रपदन विषये योजितं शास्त्रविद्भिः ।
तस्मात् क्षेत्रे तदर्हे सुविदित समयैर्देशिकैः सम्यगुप्तं
मन्त्राख्यं मुक्ति बीजं परिणति वशतः कल्पते सत्फलाय ॥ ८

904 न्यासः प्रोक्तोऽतिरिक्तं तप इति कथितः स्वध्वरश्चास्य कर्ता
अहिर्बुध्न्योऽप्यन्ववादीदगणि दिविषदामुत्तमं गुह्यमेतत् ।
साक्षान्मोक्षाय चासौ श्रुत इह तु मुधा बाध शङ्का गुणाढ्ये
तन्निष्ठो ह्यन्य निष्ठान् प्रभुरतिशयितुं कोटि कोट्यंशतोऽपि ॥ ९

905 नाना शब्दादि भेदादिति तु कथयता सूत्रकारेण सम्यक्
न्यासोपासे विभक्ते यजन हवनवच्छब्द भेदादभाक्तात् ।
आख्या रूपादि भेदः श्रुत इतरसमः किं च भिन्नोऽधिकारः
शीघ्र प्राप्त्यादिभिः स्याज्जगुरिति च मधूपासनादौ व्यवस्थाम् ॥ १०

906 यत्किञ्चिद्रक्षणीयं तदवन निपुणे न्यस्यतोऽकिञ्चनस्य
प्रस्पष्टं लोक दृष्ट्याऽप्यवगमित इह प्रार्थनाद्यङ्ग योगः ।
तस्मात् कर्माङ्गकत्वं व्यपनयति परापेक्षणाभाव वादः
साङ्गे त्वष्टाङ्ग योग व्यवहृतिं नयतः षड्विधत्वोपचारः ॥ ११

907 पञ्चाप्यङ्गान्यभिज्ञाः प्रणिजगुरविनाभाव भाञ्जि प्रपत्तेः
कैश्चित् संभावितत्वं यदिह निगदितं तत् प्रपत्त्युत्तरं स्यात् ।
अङ्गेष्वङ्गित्व वादः फल कथनमिह द्वि त्रि मात्रोक्तयश्च
प्राशस्त्यं तत्र तत्र प्रणिदधति ततः सर्ववाक्यैककण्ठ्यम् ॥ १२

908 रक्षापेक्षा स्वसाद्य प्रणयवति भरन्यास आज्ञादि दक्षे
दृष्टा नाऽत्र प्रपत्ति व्यवहृतिरिह [1] तन्मेलने लक्षणं स्यात् ।
गेहागत्यादि मात्रे निपततु शरणागत्यभिख्योपचारात्
[2] यद्वानेकार्थ भावाद्भवति [3] च विविधः पालनीयत्व हेतुः ॥ १३

909 आत्मात्मीय स्वरूप न्यसनमनुगतं यावदर्थं मुमुक्षोः
तत्त्वज्ञानात्मकं तत् प्रथममथ विधेः स्यादुपाये समेतम् ।
कैङ्कर्याख्ये पुमर्थेऽप्यनुषजति तदप्यर्थना हेतुभावात्
स्वाभीष्टानन्य साध्यावधिरिह तु भरन्यास भागोऽङ्गिभूतः ॥ १४

[1] तन्मेलनं [2] यद्वा नैकार्थं [3] हि

910 न्यासादेशेषु धर्मं त्यजन वचनतोऽकिञ्चनाधिक्रियोक्ता
कार्पण्यं वाऽङ्गमुक्तं भजनवदितरापेक्षणं वाऽप्यपोढम् ।
दुःसाधेच्छोद्यमौ वा क्वचिदुपशमितावन्यसंमेलने वा
ब्रह्मास्त्र न्याय उक्तस्तदिह न विहतो धर्म आज्ञादि सिद्धः ॥ १५

911 आदेष्टुं स्वप्रपत्तिं तदनुगुण गुणाद्यन्वितं स्वं मुकुन्दो
मामित्युक्त्वैकशब्दं वदति तदुचितं तत्र तात्पर्यमूह्यम् ।
तत्प्राप्य प्रापकैक्यं सकल फलदतां न्यासतोऽन्यानपेक्षां
प्राधान्याद्यं च किञ्चित् प्रथयति स परं श्रीसखे मुक्त्युपाये ॥ १६

912 स्वाभीष्ट प्राप्ति हेतुः स्वयमिह पुरुषैः स्वीकृतः स्यादुपायः
शास्त्रे लोके च सिद्धः स पुनरुभयथा सिद्ध साध्य प्रभेदात् ।
सिद्धोपायस्तु मुक्तौ निरवधिक दयः श्रीसखः सर्वशक्तिः
साध्योपायस्तु भक्तिर्न्यसनमिति पृथक् तद्वशीकार सिद्ध्यै ॥ १७

913 अत्यन्ताकिञ्चनोऽहं त्वदपचरणतः सन्निवृत्तोऽद्य नाथ
त्वत्सेवैकान्त धीः स्यां त्वमसि शरणमित्यध्यवस्यामि गाढम् ।
त्वं मे गोपायिता स्यास्त्वयि निहितभरोऽस्म्येवमित्यर्पितात्मा
यस्मै स न्यस्त भारः [1] सकृदथ तु सदा न प्रयस्येत् तदर्थम् ॥ १८

914 त्यक्त्वोपायानपायानपि परमजहन्मध्यमां स्वार्हं वृत्तिं
प्रायश्चित्तं च योग्यं विगत ऋणततिर्द्वन्द्व वात्यां तितिक्षुः ।
भक्ति ज्ञानादि वृद्धिं परिचरणगुणान् सत्समृद्धिं च [2] युक्तां
नित्यं याचेदनन्यस्तदपि भगवतस्तस्य यद्वाऽऽप्त वर्गात् ॥ १९

915 आज्ञा कैङ्कर्य वृत्तिष्वनघ गुरुजन प्रक्रिया नेमि वृत्तिः
स्वार्हानुज्ञात सेवा विधिषु च शकने यावदिष्टं प्रवृत्तः ।
कर्म प्रारब्ध कार्यं प्रपदन महिम ध्वस्त शेषं द्विरूपं
भुक्त्वा स्वाभीष्ट काले विशति भगवतः पादमूलं प्रपन्नः ॥ २०

[1] सकृदिति तु [2] युक्त्या

916 श्रुत्या स्मृत्यादिभिश्च स्वयमिह भगवद्वाक्य वर्गैश्च सिद्धां
स्वातन्त्र्ये पारतन्त्र्येऽप्यनितर गतिभिः सद्भिरास्थीयमानाम् ।
वेदान्ताचार्य इत्थं विविध गुरुजन ग्रन्थ संवादवत्या
विंशत्या न्यासविद्यां व्यवृणुत सुधियां श्रेयसे वेङ्कटेशः ॥ २१

917 संसारावर्त वेग प्रशमन शुभदृग्देशिक प्रेक्षितोऽहं
संत्यक्तोऽन्यैरुपायैरनुचित चरितेष्वद्य शान्ताभिसन्धिः ।
निःशङ्कस्तत्त्वदृष्ट्या निरवधिकदयं *प्रार्थ्य संरक्षकं त्वां
न्यस्य त्वत्पादपद्मे वरद निजभरं निर्भरो निर्भयोऽस्मि ॥ २२



कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥



* प्राप्य

श्रीः

## श्रीमन्निगमान्त महा देशिकैः स्वयमनुगृहीता न्यास विंशति व्याख्या



**श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।**
**वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥**

श्रुति स्मृत्यादि तात्पर्य निरूढा न्यास विंशतिः ।
स्वय व्याक्रियतेऽस्माभिः दिङ्मात्रेण सदिच्छया ॥

896 [1]प्रपत्त्याद्यपरपर्यायां न्यासविद्यां [2]सञ्जिघृक्षुः प्रथमं तत्त्वज्ञानादिमुखेन तदधिकार-हेतुभूतमाचार्यसंग्रहणमाह—**सिद्धम्** इति ।

एतेषामाचार्यगुणानां प्रमाणानि—"तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" [3]इत्यादीनि । **श्रोत्रियं** – श्रुतवेदान्तम् । **समयानियतया**–यथाकालं प्रवृत्तया; यद्वा धर्मज्ञसमयव्यवस्थितया । **जितविषयगणं** – स्ववशेन्द्रियवर्गम् । सम्यक् ज्ञानार्थतया गुर्वभिगमनेऽपि स्वेच्छया [4]प्रवर्तमानस्य नियमांशमात्रे [5]विधिरिति ज्ञापनार्थम् **इप्सेत्** इति "सन्प्रयोग": ॥ १

897 "आचार्यवान् पुरुषो वेद", " आचार्याद्धैव विदिता विद्या साधिष्ठं [6]प्रापत् ", " आचार्यवत्तया मुक्तौ " इत्यादिप्रमाणानुसारतः आचार्यवरणे सिद्धे, " आचार्यदेवो भव " " देवमिवाचार्यमुपासीत " इत्यादिविहितम् तत्सेवनमाह–**अज्ञानध्वान्त** इति ।

अत्र उक्ता हेतवः आचार्ये भगवति च अन्वीयन्ते । **जन्मप्रध्वंसिजन्म**–विद्याजन्म । " ब्रह्मविद्याप्रदानस्य देवैरपि न शक्यते । प्रतिप्रदानमथवा दद्याच्छक्तित आदरात् ॥ " इत्याद्यभिप्रेत्य **अप्रत्युपकरणधिया** इत्युक्तम् ॥ २

898 सम्यगुपसन्ने सच्छिष्ये " तस्मै स विद्वान् " इत्यादिविहितमाचार्यकृत्यमाह—**सद्बुद्धिः** इति ।

[1]प्रपत्यपरपर्यायां [2]सञ्जिघृक्षुः तत्त्वज्ञानादि........संग्रहमाह [3]इत्यादीनि द्रष्टव्यानि । समयनियतया [4]प्रवृत्तस्य [5]विधिज्ञापनार्थं [6]प्रापत् " आचार्य वत्तया मोक्षमामनन्ति... मुक्तौ " इत्याद्यनुसारतः आचार्यवरणे सिद्धे, "देवमिव

[1] **अभिमतं**–मोक्षोपयुक्तमर्थजातम् ॥ ३

899 मुक्तिकामस्य [2] मूलमन्त्राद्यभिधेयतया शिक्षणीयेऽर्थे प्रधानांशं, तस्य च नित्यानुसन्धेयत्वमाह—**स्वाधीन** इति ॥ ४

900 ईदृशोपदेशलब्धसम्यग्ज्ञानस्य पुरुषस्य " अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ", " मामेकं शरणं व्रज " इत्यादिभिरपवर्गोपायतया विहितयोः भक्तिप्रपत्त्योः [3] अधिकारिव्यवस्थामाह—**मोक्षोपाय** इति ॥ ५

901 इत्थमधिकारिभेदात् गुरुलघुविकल्पसंभवेऽपि प्रपत्तिप्रभावे दुर्बलबुद्धीन् प्रत्याययति—**सानुक्रोश** इति ।

वानरवायसराक्षसद्रौपदीगजेन्द्रसुमुखत्रिशङ्कुशुनश्शेफ[illegible]नैः इति शेषः । **धर्मस्थेयाः**–विवादगोचरधर्मनिर्णेतारः । **पूर्वे**–भगवद्यामुनादयः ॥ ६

902 सर्वशास्त्रसाधारणो विश्वासः, तस्य प्रपत्तिलक्षणवाक्ये महत्त्वेन विशेषणं किमर्थम् ? इत्यनुभाष्य परिहरति—**शास्त्रप्रामाण्य** इति ।

अत्र अर्थस्वभावेन शङ्काप्रकर्षसंभवात् तन्निवृत्त्यै " विदितः स हि धर्मज्ञः ", " मित्रभावेन संप्राप्तम् " " सकृदेव प्रपन्नाय " [4] इत्यादिप्रसिद्धशरण्यगुणविशेषादिपरामर्शभूम्ना विश्वासप्रकर्षः संपाद्य इति भावः ॥ ७

903 [5]किमीदृशविश्वाससापेक्षतया गुरुतरया प्रपत्त्या ?' 'सकृज्जप्तेन मन्त्रेण कृतकृत्यः सुखी भवेत्", "प्रपत्तिवाचैव निरीक्षितुं वृणे", इत्यादिप्रमाणसंप्रदायैः मुक्तिः [6] सिध्येदित्यत्राह—**नेहाभिक्रान्तिनाश** इति । **उक्तम्**– [7]कर्मयोगप्रकरणे इति शेषः ।

"सकृदुच्चरितं येन हरिरित्यक्षरद्वयम्" इत्यादि न्यायेन अत्र मन्त्रोच्चारणादिकं तन्मुखेनैव मुक्तिं साधयति । यथोक्तं [8]सात्यकितन्त्रे, "अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत् । मयि निक्षिप्तकर्तव्यः कृतकृत्यो भविष्यति"—इति ॥ ८

904 ननु एवं प्रपत्तिरपि भक्तियोगद्वारेणैव मुक्तिहेतुः स्यात् इत्याशङ्कायां, "मुमुक्षुर्वै शरणमहं प्रपद्ये" इति [9] श्रुतिस्वारस्यसिद्धमव्यवहितमोक्षसाधनत्वं [10]व्यञ्जकान्तरैरपि द्रढयपि—

[1]इदं न दृश्यते [2]मूलमन्त्राद्य-भिप्रेततया शिक्षणीये प्रधानांशं तस्य नित्यत्वं चाह [3]अधिकारव्यवस्था
[4] इत्थादिशरण्यगुणविशेषादि विमर्शभूतमहाविश्वासादिप्रकर्षः [5]किमीदृशविश्वासापेक्षया
[6]सिध्येदित्याह [7]कर्मयोगाधिकारे [8]सात्वततन्त्रे [9]श्रुतिस्वारस्याविरुद्धं [10]व्यञ्जकान्तरेणापि

**प्रोक्तः**– "तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः" इति वाक्येन । **कथितः**– " यः समिधा " इत्यारभ्य, " यो नमसा स स्वध्वरः " [1]इत्यृगंशेन । **अन्ववादीत्**– ऋगर्थमन्वभाषत । यथा "समित्साधनकादीनां यज्ञानां न्यासमात्मनः । नमसा योऽकरोद् देवे स स्वध्वर इतीरितः ॥" इति । **अगणि दिविषदामुत्तमं गुह्यमेतत्**– " एतद्वै महोपनिषदं देवानां गुह्यम् " इत्यादिश्रुत्या । **तन्निष्ठः** इत्यादिना "सत्कर्मनिरताः शुद्धाः" इत्याद्युक्त प्रपन्न प्रभावो विवृतः । यद्यपि "ओमित्यात्मानं युञ्जीत" इति प्रणवकरणको न्यासः श्रुतः, तथाऽपि तदनर्हाणां तद्विरहेऽपि [2]तन्त्रोक्तप्रकारेण तत्प्रयोगो युज्यते इत्यभिप्रायेण **तन्निष्ठ** इति सामान्योक्तिः । श्रुतिसिद्धेऽपि प्रपदने सामान्य धर्मभूत सत्यवचनादि नयात् सर्वाधिकारत्वं च न विरुद्धम् । " सर्वस्य शरणं [3]सुहृत् ", इत्यादिष्वेतदभिप्रेतम् ॥ ९

905 'सन्तु भाष्योक्त भक्त्यङ्गभूत प्रपत्ति प्रशंसापराणि एतानि वाक्यानि, गुणोपसंहार-पादे प्रपत्तेः स्वतन्त्र विद्यात्व स्थापनाभावात्, [4]अनन्यथासिद्ध समान न्यायाभावाच्च' इति शङ्कायां, प्रपदनस्य मोक्षं प्रति पृथगुपायत्वोपपादनं तत्रैव सुस्पष्टमित्याह—

**अभाक्तात्**–अनौपचारिकात् इत्यर्थः । सद्विद्या दहर विद्यादिषु **शब्द** भेदो हि तत्तद्गुणविशिष्ट [5]ब्रह्म विषय प्रत्ययावृत्त्यभिधायित्व रूपेणोपपाद्यः; इह तु याग दान होमादिवत् अपर्यायतयैव [6]व्युत्पत्तेः सिद्धः इति भावः । न्यासविद्या इति **आख्या** । अर्थस्वभावादत्र [7]अभिमत प्रदान सामर्थ्य विशिष्ट पर निरपेक्ष रक्षकत्वं **रूपम्** । **आदि**शब्देन परिकरप्रकरणयोः ग्रहणम् । **इतरसमः**–विद्यान्तरसमः । [8]**किं च** इत्यादिना प्राग्दर्शिताधिकारि भेद स्मारणम् । स्वातन्त्र्येण मोक्षोपायत्वेन सद्विद्यादेः व्यावृत्त इहाधिकारो न स्यादिति शङ्कायां मधुविद्या-द्युदाहरणम् । भाष्ये तु प्रपत्तेः भक्त्यङ्गत्वोक्तिः न [9]स्वातन्त्र्य बाधिका; विषय भेदादुभयाकार-योगिषु क्वचिदन्यतरोक्तेरविरोधात् ॥ १०

906 अङ्गत्वमेव प्रपत्तेः इति पक्षः परिहृतः । अथ स्वातन्त्र्येऽपि निरङ्गकत्वपक्षं परिहरति—

[1] इत्यन्तेन ऋगंशेन...ईशानोऽन्वभाषत । [2] तन्त्रोक्तप्रकारोऽत्र तन्त्रोक्तप्रकारेण तत्प्रयोगोऽत्र [3] सुहृत्" इत्याद्यभिप्रेतम् [4] अनन्यथासिद्धसामान्यन्यायाभावाच्च [5] ब्रह्मविषयप्रत्ययावृत्त्य-भिधायि [6] उत्पत्तेः सिद्धिः [7] अभयप्रदानसामर्थ्यविशिष्टपरमकारुणिकतया
[8] किं चेत्यादि प्राग्दर्शिताधिकारिभेदस्मारणम् । भाष्ये तु प्रपत्तेः......... ।
[9] स्वातन्त्र्यविषयबाधिका,......उभयाधिकारयोगिषु

**अवगमितः**– "तदेकोपायता याच्ञा प्रपत्तिः", "अप्रार्थितो न गोपायेत्", " शरणं च प्रपन्नानाम् " इत्यादिभिः इति शेषः । **तस्मात्** इत्यादिना "प्रपत्तेः क्वचिदप्येवं परापेक्षा न विद्यते" इत्यस्य [1]निर्विषयत्व शङ्काव्युदासः । तथा "षड्विधा शरणागतिः" इति वचनात् आग्नेयादि वदङ्गवत् आनुकूल्य सङ्कल्पादि षट्कं संभूय एकं कारणं स्यादित्यत्रोत्तरम्—**साङ्गे** तु इत्यादि । "न्यासः पञ्चाङ्गसंयुतः" इति व्यवस्थापक-वचनानुगुण मङ्गाङ्गिभाव समुच्चयेन षड्विधत्व वचनं नेयमिति भावः ॥ ११

907 एवमङ्गाङ्गिभावः सिद्धः । तत्र अवान्तरवैयाकुलीं शमयति—

प्रपत्तिदशायां प्रातिकूल्यवर्जनाद्यभावे साङ्गस्योपायस्य वैकल्यं स्यात् । पश्चात् तु प्रातिकूल्यस्य संभवेऽपि कृतस्योपायस्य न वैकल्यम्; किंतु प्रत्यवाय परिहारार्थं यथार्हं प्रतिविधानमेव कार्यम् ।

"तथा पुंसामविस्रम्भात् प्रपत्तिः प्रच्युता भवेत्"

इत्येतदपि तात्कालिक विस्रम्भ वैकल्याभिप्रायम् । उत्तरकाले सतोऽपि विश्वासस्य पूर्वकृत प्रपत्त्यङ्गत्वाभावेन तद्विरहे । एवं च ब्रह्मास्त्र न्याय दृष्टान्तः अप्यत्र योग्यांशे स्थाप्यः, अन्यथा अतिप्रसङ्गात् । एतेन " उपायापायसंयोगे निष्ठया हीयतेऽनया" इत्येतदपि गतार्थम्, तात्कालिकोपायापाय संयोगस्य प्रपत्तिविरोधित्वे तात्पर्यात् । न च आनुकूल्यसङ्कल्पस्य अङ्गत्वेन श्रवणात् सङ्कल्पितकरणमप्यङ्गं, तथा श्रुत्यभावात् यथाश्रुति सङ्कल्पमात्रस्याङ्गत्वे [2]सङ्कल्पिताचरणस्य अङ्गत्वकल्पनानुपपत्तेश्च । अकृत्यकरण-स्वतन्त्रविधेरेव सिध्यति इति नोपप्लवावकाशः । "आनुकूल्ये-तराभ्यां तु विनिवृत्तिरपायतः" इत्यनेनापि अपायनिवृत्तौ सङ्कल्पादिविशेषस्य तात्कालिकोप-योगः [3]प्रदर्श्यते । अत्र आनुकूल्यशब्दो हि तत्सङ्कल्पप्रतिपादनपरः, "आनुकूल्यस्य सङ्कल्पः" [4]इत्यादि सिद्धानुवादात् । न च "उपायापाय" इत्यादौ प्रपत्तिनिष्ठाहानिर्विवक्षिता । किंतु उपायापाय त्यागविशिष्ट मध्यम वृत्तिहानिः । विशेषणाभावेऽपि हि विशिष्टाभावः सिध्यति । अत एव हि तत्र "अपायसंप्लवे सद्यः प्रायश्चित्तं समाचरेत्" इत्यादिना तावन्मात्रनिमित्तं प्रायश्चित्तमेव विधीयते । न तु पूर्वकृतां प्रपत्तिं प्रच्युतामभिप्रेत्य तत्फलार्थं पुनः प्रपत्तिः॥ १२

908 प्रस्तुत मुख्योपचार प्रयोग व्यवस्थापनाय प्रपत्तिलक्षणं शोधयति—

[1] निरङ्गकत्व [2] सङ्कल्पितकरणस्य अङ्गत्वकल्पनानुपपत्तेश्च । आनुकूल्येतरा
[3] प्रदर्श्यते । अत्र [4] इत्यादि सिद्धानुवादत्वात्

**प्रणयो**ऽत्र याञ्चा । **आज्ञा**—आज्ञाकरणम् । **आदि**शब्देन भृतिदानादिसंग्रहः । **अनेकार्थभावात्**—शरणशब्दस्य अनेकार्थरूढत्वादित्यर्थः । प्रपदनरूपत्वाभावेऽपि केषाञ्चित् गृहागमनादीनां रक्ष्यताहेतुत्वं प्रसिद्धमित्याभिप्रेत्य **भवति च** इत्यादिकमुक्तम् ॥ १३

909 एवं लौकिक वैदिक सर्वप्रपत्तीनां [1]साधारणरूपमुक्तम् । अथ मोक्षैकप्रयोजनायां प्रपत्तौ सर्व निवृत्ति धर्मसाधारणं स्वाभाविक परशेषत्वानुसन्धानादिरूपं विशेषमाह—

**आत्मीयं**—उपायफलादि । **आत्मा च आत्मीया**श्चेति यावन्तः अर्थाः सन्ति प्रमाणसिद्धाः तावतां सर्वेषां भगवच्छेषत्वानुसन्धानं कार्यम् । तच्चानुसन्धानमुपायदशायामपि निवृत्तिधर्मविधिस्वाभाव्यादनुवर्तते । इह चामुत्र च स्वयंप्रयोजने कैङ्कर्ये स्वत एव भवति । अङ्गिभूतभरन्यासांशस्तु न यावदर्थं; किन्तु यथालोकं यावदनन्यसाध्यं स्वाभीष्टं तावत्येव भवतीत्यर्थः ॥ १४

910 सर्वशक्तौ भरं न्यस्यतः सर्वधर्मत्यागवचनात् वर्णाश्रमादिधर्मरूपमाज्ञाकैङ्कर्यं तदनुविद्धमनुज्ञाकैङ्कर्यं च न स्यातामित्यत्राह—

**क्वचित्**—चापलात् अशक्यप्रवृत्ते कस्मिंश्चिदधिकारिणि । **अन्यसम्मेलने**—प्रपत्त्यङ्गव्यतिरिक्तानां तदर्थतया स्वीकृतौ । **तत्**—[2]तस्मात् धर्माणां स्वरूपत्यागस्य प्रपत्त्यङ्गत्वाभावात् तेषां प्रपत्त्यङ्गत्वेनानुपादानाच्च इत्यर्थः । सर्वधर्मत्यागवचनस्य अत्र सर्वाविरुद्धेषु अर्थान्तरेषु संभवत्सु तद्विपरीतार्थकल्पनं न युक्तमिति भावः । एतेन अलेपकादिपक्षाश्च प्रतिक्षिप्ताः ॥ १५

911 ननु यदि प्रपत्तिरुपायः स्यात् तदा हि तस्या अङ्गित्वं, [illegible] च वक्तव्यम् । [3]सा तु तत्तद्वाक्येषु उपायतयोक्तस्य शरण्यस्य विशेषणतया [4]प्रयुक्तैरेकादिशब्दैः [5]उपायबुद्ध्यनर्हत्वेन [6]व्यवच्छिद्यते । तस्मात् पूर्वोक्तं सर्वमयुक्तमित्यत्राह—

**तत्**—विध्यनुरोधेन नेतव्यत्वात् इति भावः । अन्यथाऽप्युपपन्नं सिद्धोपायस्यैक्यं प्रपत्तेः तत्प्रसादोपायत्वं न विरुन्ध्यादिति भावः।[7]एतेन [illegible]श्चात्र निरस्ताः वेदितव्याः ॥ १६

[1] साधारणरूपत्वमुक्तम् [2] तस्मात् दत्तः सर्वधर्माणां...प्रपत्त्यर्थत्वेनाप्रतिपादनाच्च
[3] अङ्गित्वं तु [4] प्रयुक्तैरेकशब्दैः [5] एकोपायबुद्ध्यनर्हत्वेन [6] व्यवह्रियते [7] एवं निर्विशेषा

912 उक्तार्थस्थिरीकरणाय सामान्यत उपायशब्दार्थं ( विवृण्वन् ) सिद्धसाध्योपाय विशेषौ तत्प्रयोजनं च विभजते—

913 समर्थितमेव साङ्गभरन्यासं यथावदनुष्ठानाय मुखभेदेन शिक्षयन् तद्विषयकर्तव्यशेषं नास्तीत्याह—

**यस्मै** प्रयोजनाय इति शेषः। **सकृत्** इत्यनेन [1]उपासनवदावृत्तिसापेक्षत्वं नास्तीत्युच्यते। "सकृत् कृतः शास्त्रार्थः" इत्यस्यात्रापवादो नास्ति। प्रत्युत "सकृदेव" इत्यादिभिः अनुग्रह एव। **सदा**—यावत्फलप्राप्तीत्यर्थः।

ननु न्यासनिष्ठमेव "तस्यैवं विदुषः" इति परामृश्य, तत्कर्तव्यत्वेन पुरुषविद्याऽऽम्नाता। सा च "यन्मरणं तदवभृथः" इत्यन्ता यज्ञदृष्टिरूपा च। अतो यावज्जीवं तदर्थं कर्तव्यस्य विधीयमानत्वात्, "न प्रयस्येत् तदर्थम्" इत्यनुपपन्नम्। मैवम्—तत्रापि हि न्यस्तभरस्य कर्तव्यान्तरनैरपेक्ष्यमेव विवक्षितम्। यदि तु प्रस्तुतविद्याङ्गतयाऽत्र यज्ञक्लृप्तिर्विधीयते तर्हि दर्शपूर्णमासादीनां क्लृप्तिर्न वाच्या। तेषां यज्ञोपयोगित्वाभावात् [2]अश्रुतापूर्वतदन्वितयज्ञान्तरकल्पनमनेकशास्त्रार्थदृष्टिविधिकल्पनं चात्यन्तगौरवोपहतम्। एकस्यावभृथात् पूर्वमन्येषां क्लृप्तिश्चानुपपन्ना। तस्मात् "एवं शरणमभ्येत्य भगवन्तं सुदर्शनम्। अनुष्ठितक्रतुशतो भवत्येव न संशयः" इतिवत् यज्ञादिकं सर्वमस्य स्वतः संपन्नं भवतीति स्तुतिमात्रे तात्पर्यं ग्राह्यम्। शारीरकभाष्यमपि एतदविरोधेन भाव्यम्॥ १८

914 कृतकृत्यस्योत्तरदशायां [3]स्वाधिकारानुगुणं त्याज्यं स्वतन्त्रविधिप्राप्तं कर्तव्यमनुसन्धेयं प्रार्थनीयं च संगृह्णाति—

**उपायान्**—काम्यधर्मान्। **अपायान्**—प्रत्यवायहेतून्। **परं**—केवलम्; प्रपत्त्युत्तरकालम् वा। **मध्यमां**—उपायापायवर्गानन्विताम्। **स्वार्हवृत्तिं**—नित्यरूपां तत्समाननैमित्तिकरूपां च वृत्तिम् "अपायसंप्लवे सद्यः प्रायश्चित्तं समाचरेत् प्रायश्चित्तिरियं साऽत्र यत्पुनः शरणं व्रजेत्॥" इत्युक्तमाह—**प्रायश्चित्तं च योग्यम्**

[1]उपासनवदस्यावृत्ति [2]अश्रुतपूर्वं [3]स्वाधिकाराद्यनुगुणं

इति । **'अजहत्'** इत्यनुषज्यते । "देवर्षिभूतात्मनृणां पितॄणां न किङ्करो नायमृणी च राजन्" इत्याद्युक्तं सूचयति — **विगतऋणतातिः** इति । ब्रह्मचर्यादिभिरपाकर्तव्यं भगवत्प्रपन्नस्य [1]प्रपत्त्यैव कृतम्; [2]देवयज्ञादिकं त्वस्य मध्यमवृत्त्यनुप्रविष्टं कैङ्कर्यमिति भावः । **द्वन्द्वातितिक्षा**वचनं
पादानार्थं च । **परिचरणगुणान्** — कैङ्कर्योपकरणभूतान् गन्धपुष्पादीन् । यद्वा फलसङ्गत्यागादीन् । [3]**सत्समृद्धिर**पि कैङ्कर्यानुपयुक्ता नैव
इत्युक्तम् । **भगवतः** इत्यादिना देवतान्तरेभ्यस्तदीयेभ्यश्च भक्त्यादिकमपि न याच्यमिति सूच्यते ॥ १९

915 उक्तप्रकारस्याधिकारिणः स्वाभिमतकाले परमफलप्राप्तिमाह—

प्रपत्त्यङ्गत्वाभावेऽपि, "विहितत्वाच्चाश्रमकर्मोऽपि" इति न्यायेन स्वतन्त्राधिकारसिद्धे शक्तस्यास्य कर्तव्यम् **आज्ञाकैङ्कर्यम्** । अकरणे प्रत्यवायरहितम् **अनुज्ञाकैङ्कर्यम्** । **द्विरूपम्** इति — पुण्यपापरूपमित्यर्थः ॥ २०

916 परमपुरुषार्थसाधिनीं भगवत्प्रपत्तिं प्रमाणतः प्रभावतः प्रवक्तृतश्च विशिंषन् तद्विषयग्रन्थनिर्माणप्रयोजनं च प्रतिपादयति—

"यो ब्रह्माणं विदधाति पूर्वम्" इत्यादिकया **श्रुत्या**; "देवानां[1] दानवानां च," "शरण्यं शरणं च त्वामाहुर्दिव्या महर्षयः", "शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः" इति **स्मृत्यादिभिश्च**; "स्थिते मनसि सुस्वस्थे", "सकृदेव प्रपन्नाय", "सर्वधर्मान् परित्यज्य" इत्यादिभिः **भगवद्वाक्यवर्गैश्च । सिद्धाम्**—प्रमितामित्यर्थः । [illegible] **भगवच्छब्दः** । **स्वातन्त्र्ये पारतन्त्र्येऽपि**—अव्यवधानेन व्यवधानेन वा मुक्तिसाधनत्वे ; यद्वा स्वतन्त्राङ्गत्वविवादेऽपि इत्यर्थः **गुजननग्रन्थाः** स्तोत्रगद्यादयः ॥ २१

917 उक्तमुपायं सुखग्रहणाय स्वानुष्ठानमुखेन निगमयति—

अत्र सर्वशक्तौ परमकारुणिके सर्वाभिमतवरप्रदे न्यस्तभरत्वात् [2]निर्भरत्वनिर्भयत्वासिद्धिः । २२

[1]**प्रपत्त्यैवापाकृतं** [2]**देवयज्ञादि कर्तव्यमस्य** [3]**सत्समृद्धीरपि** [4]**याचेत्** [5]**युक्त्या**

[1] **देवानां च, शरण्यं शरणं** [2]**निर्भरत्व–निर्भयत्वादिसिद्धिः**

अयमत्र मुमुक्षोरनुशासनीयसंग्रहः— सदाचार्योपसत्तिपूर्वकं सम्यक् ज्ञानं संपाद्य, गुरुतरोपायान्तरनिष्पादनाद्यनुगुणज्ञानशक्तिविरहान्निर्विण्णः, स्वशक्यसकृत्कर्तव्यलघूपायपरामर्शेन प्रत्यवस्थापितः फलसङ्कर्तृत्वादित्यागयुक्तसाङ्गभरन्यासेन कृतकृत्यः स्वीकृतभरं शरण्यं श्रियःपतिमवलोक्य निर्भरो निर्भयश्च स्वयंप्रयोजनकैङ्कर्येण सुखं वर्तेत इति ॥ २२



कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥



श्रीः

# न्यासदशकम्



श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥



अहं मद्रक्षण भरो मद्रक्षण फलं तथा ।
न मम श्रीपतेरेवेत्यात्मानं निक्षिपेद् बुधः ॥ १

न्यस्याम्यकिञ्चनः श्रीमन्ननुकूलोऽन्यवर्जितः ।
विश्वास प्रार्थना पूर्वं आत्मरक्षा भरं त्वयि ॥ २

[1]स्वामी स्वशेषं स्ववशं स्वभरत्वेन निर्भरम् ।
स्वदत्त स्वधिया स्वार्थं स्वस्मिन् [2]न्यस्यति मां स्वयम् ॥ ३

श्रीमन्नभीष्ट वरद त्वामस्मि शरणं गतः ।
एतद्देहावसाने मां त्वत्पादं प्रापय स्वयम् ॥ ४

त्वच्छेषत्वे स्थिर धियं त्वत्प्राप्त्येक प्रयोजनम् ।
निषिद्ध काम्य रहितं कुरु मां नित्य किङ्करम् ॥ ५

देवी भूषण हेत्यादि जुष्टस्य भगवंस्तव ।
नित्यं निरपराधेषु कैङ्कर्येषु नियुङ्क्ष्व माम् ॥ ६

[1] स्वामिन् [2]न्यस्यसि

924 मां मदीयं च निखिलं चेतनाचेतनात्मकम् ।
स्वकैंकर्योपकरणं वरद स्वीकुरु स्वयम् ॥

925 त्वदेक [1] रक्ष्यस्य मम त्वमेव करुणाकर ।
न प्रवर्तय पापानि प्रवृत्तानि निवर्तय ॥

926 अकृत्यानां च करणं कृत्यानां वर्जनं च मे ।
क्षमस्व निखिलं देव प्रणतार्तिहर प्रभो ॥

927 [2] श्रीमान् नियत पञ्चाङ्गं मद्रक्षण भरार्पणम् ।
[3] अचीकरत् स्वयं स्वस्मिन्नतोऽहमिह निर्भरः ॥



कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥



[1] रक्षस्य [2] श्रीमन् [3] अचीकर

श्रीः

# गरुडदण्डकः



श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥



928 नमः पन्नग नद्धाय वैकुण्ठ वश वर्तिने ।
श्रुति सिन्धु सुधोत्पाद मन्दराय गरुत्मते ॥ १

929 गरुडमखिल वेद नीडाधिरूढं [1] द्विषत्पीडनोत्कण्ठिताकुण्ठ वैकुण्ठपीठीकृत-स्कन्धमीडे स्वनीडागति प्रीत रुद्रा सुकीर्ति स्तनाभोग गाढोपगूढ स्फुरत्कण्टक-व्रात वेध व्यथा वेपमान द्विजिह्वाधिपाकल्प विष्फार्यमाण स्फटावाटिका रत्न रोचिश्छटा राजि नीराजितं कान्ति कल्लोलिनी राजितम् ॥ २

930 जय गरुड सुपर्ण दर्वीकराहार देवाधिपाहार हारिन् दिवौकस्पति क्षिप्त दम्भोलि धारा किणाकल्प कल्पान्त वातूल कल्पोदयानल्प[2]वीरायितोद्य-च्चमत्कार दैत्यारि जैत्रध्वजारोह निर्धारितोत्कर्ष संकर्षणात्मन् गरुत्मन् मरुत्पञ्चकाधीश सत्यादि मूर्ते न कश्चित् समस्ते नमस्ते पुनस्ते नमः ॥ ३

931 नम इद मजहत्सपर्याय पर्याय निर्यात पक्षानिलास्फालनोद्वेल पाथोधि वीची चपेटाहतागाध पाताल भांकार संक्रुद्ध नागेन्द्रपीडासृणी भाव भास्वन्नख श्रेणये चण्ड तुण्डाय नृत्यद्भुजङ्गभ्रुवे वज्रिणे दंष्ट्रया तुभ्यम् अध्यात्मविद्या विधेया विधेया भवद्दास्यमापादयेथा दयेथाश्च मे ॥ ४

[1] द्विषत्पीडनोत्कण्ठितारूढवैकुण्ठ [2] वीरायितो[illegible]च्चमत्कारे

932 मनुरनुगत पक्षि वक्त्र स्फुरत्तारकस्तावकश्चित्रभानुप्रिया शेखरस्त्रायतां नस्त्रिवर्गापवर्ग प्रसूतिः परव्योम धामन् वलद्वेषिदर्पज्वलद्वालखिल्य प्रतिज्ञा-वतीर्ण स्थिरां तत्त्व बुद्धिं परां भक्तिधेनुं जगन्मूल कन्दे मुकुन्दे महानन्ददोग्ध्रीं दधीथा मुधाकामहीनामहीनामहीनान्तक ॥ ५

933 षट्त्रिंशद्गण चरणो
नर परिपाटी नवीन गुम्भ[1]गुणः ।
विष्णुरथ दण्डकोऽयं[2]
विघटयतु विपक्ष वाहिनी व्यूहम् ॥ ६

934 विचिल सिद्धिदः सोऽयं वेङ्कटेश विपश्चिता ।
गरुडध्वज तोषाय गीतो गरुड दण्डकः ॥ ७

—=०=—

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥



[1] गणः [2] कोऽसौ

श्रीः

# अभीतिस्तवः



श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥



935 अभीतिरिह यज्जुषां यदवधीरितानां भयं
भयाभय विधायिनो जगति यन्निदेशे स्थिताः ।
तदेतदतिलङ्घित द्रुहिण शंभु शक्रादिकं
रमासखमधीमहे किमपि रङ्गधुर्यं महः ॥ १

936 दया शिशिरिताशया मनसि मे सदा जागृयुः
श्रियाध्युषित वक्षसः श्रित मरुद् वृधा सैकताः ।
जगद्दुरित घस्मरा जलधि डिम्भ डम्भस्पृशः
सकृत्प्रणत रक्षण प्रथित संविदः संविदः ॥ २

937 यदद्य मित बुद्धिना बहुल मोह भाजा मया
गुण ग्रथित काय वाङ्मनस वृत्ति वैचित्र्यतः ।
अतर्कित हिताहित क्रम विशेषमारभ्यते
तदप्युचितमर्चनं परिगृहाण रङ्गेश्वर ॥ ३

938 मरुत्तरणि पावक त्रिदश नाथ कालादयः
स्वकृत्यमधिकुर्वते त्वदपराधतो बिभ्यतः ।
महत् किमपि वज्रमुद्यतमिवेति यच्छ्रूयते
तरत्यनघ तद्भयं य इह तावकः स्तावकः ॥ ४

939 भवन्तामिह यः स्व धी नियत चेतनाचेतनं
पनायति नमस्यति स्मरति वक्ति पर्येति वा ।
गुणं कमपि वेत्ति वा तव गुणेश गोपायितुः
कदाचन कुतश्चन क्वचन तस्य न स्याद् भयम् ॥ ५

940 स्थिते मनसि विग्रहे गुणिनि धातु साम्ये सति
स्मरेदखिल देहिनं य इह जातुचित् त्वामजम् ।
तयैव खलु संधया तमथ दीर्घ निद्रावशं
स्वयं विहित संस्मृतिर्नयसि धाम नैःश्रेयसम् ॥ ६

941 रमादयित रङ्गभूरमण कृष्ण विष्णो हरे
त्रिविक्रम जनार्दन त्रियुग नाथ नारायण ।
इतीव शुभदानि यः पठति नामधेयानि ते
न तस्य यम वश्यता नरक पात भीतिः कुतः ॥ ७

942 कदाचिदपि रङ्गभू रसिक यत्र देशे वशी
त्वदेक नियताशयस्त्रिदश वन्दितो वर्तते ।
तदक्षत तपोवनं तव च राजधानी स्थिरा
सुखस्य सुखमास्पदं सुचरितस्य दुर्गं महत् ॥ ८

943 त्रिवर्ग पथ वर्तिनां त्रिगुण लङ्घनोद्योगिनां
द्विषत्प्रमथनार्थिनामपि च रङ्ग दृश्योदयाः ।
स्खलत्समय कातरी हरण जागरूकाः प्रभो
कर ग्रहण दीक्षिताः क [1]इव ते न दिव्या गुणाः ॥ ९

[1] इह

944 बिभेति भवभृत् प्रभो त्वदुपदेश तीव्रौषधात्
कद्ध्व रस दुर्विषे बलिश भक्षवत् प्रीयते ।
अपथ्य परिहार धी बिमुखमित्थमाकस्मिकी
तमप्यवसरे क्रमादवति वत्सला त्वद्दया ॥ १०

945 अपार्थ इति निश्चितः प्रहरणादि योगस्तव
स्वयं वहसि निर्भयस्तदपि रङ्ग [1]पृथ्वीधर ।
स्वरक्षणमिवाभवत् प्रणत रक्षणं तावकं
यदात्थ [2]परमार्थविन्नियतमन्तरात्मेति [3]ते ॥ ११

946 लघिष्ठ सुख सङ्गदैः स्वकृत कर्मनिर्वर्तितैः
कलत्र सुत सोदरानुचर बन्धु संबन्धिभिः ।
धन प्रभृतिकैरपि प्रचुर भीति भेदोत्तरैः
न बिभ्रति धृतिं [4]प्रभो त्वदनुभूति भोगार्थिनः ॥ १२

947 न वक्तुमपि शक्यते नरक गर्भ वासादिकं
वपुश्च बहु धातुकं निपुण चिन्तने तादृशम् ।
त्रिविष्टप मुखं तथा [5]दिवि पदस्य ते दीव्यतः
किमत्र न भयास्पदं भवति रङ्ग पृथ्वीपते ॥ १३

948 भवन्ति मुख भेदतो भय निदानमेव प्रभो
शुभाशुभ विकल्पिता जगति देश कालादयः ।
इति [6]प्रचुरसाध्वसे मयि दयिष्यसे त्वं न चेत्
क [7]इत्थमनुकम्पिता त्वदनुकम्पनीयश्च कः ॥ १४

[1]पृथ्वीपते [2]परमात्मा [3]मे [4]विभो
[5]तव पदस्य देदीप्यतः [6]प्रथित साध्वसे [7]इत्थमनुकम्पते

949 सकृत् प्रपदन स्पृशामभय दान नित्यव्रती
न च द्विरभिभाषसे त्वमिति विश्रुतः स्वोक्तितः ।
यथोक्त करणं विदुस्तव तु यातुधानादयः
[1]कथं वितथमस्तु तत् कृपण सार्वभौमे मयि ॥ १५

950 अनुक्षण समुत्थिते दुरित वारिधौ दुस्तरे
यदि क्वचन निष्कृतिर्भवति साऽपि दोषाविला ।
तदित्थमगतौ मयि प्रतिविधानमाधीयतां
स्वबुद्धि परिकल्पितं [2]किमपि रङ्गधुर्य त्वया ॥ १६

951 विषाद बहुलादहं [3]विषय निर्जितो दुर्जयात्
बिभेमि वृजिनोत्तरस्त्वदनुभूति विच्छेदतः ।
मया नियत नाथवानयमिति त्वमर्थापयन्
दयाधन जगत्पते दयित रङ्ग संरक्ष माम् ॥ १७

952 निसर्ग निरनिष्टता तव निरंहसः श्रूयते
ततस्त्रियुग सृष्टिवद्भवति संहृतिः क्रीडितम् ।
तथाऽपि शरणागत प्रणय भङ्ग भीतो भवान्
मदिष्टमिह यद्भवेत् किमपि मा स्म [4]तज्जीहपत् ॥ १८

953 कयाधुसुत वायस द्विरदपुंगव द्रौपदी-
विभीषण भुजङ्गम [5]व्रजगणाम्बरीषादयः ।
भवत्पद समाश्रिता भय विमुक्तिमापुर्यथा
लभेमहि तथा वयं सपदि [6]रङ्गनाथ त्वया ॥ १९

[1]तथावितथमस्तु [2]सपदि [3]विषयबर्गतो [4]तज्जीहपः
[5]व्रजजनाम्बरीषादयः [6]रङ्गधुर्य

954 भयं शमय रङ्गधाम्नचनितराभिलाष स्पृशां
श्रियं बहुलय प्रभो श्रित विपक्षमुन्मूलय ।
स्वयं समुदितं वपुस्तव निशामयन्तः सदा
वयं त्रिदश निर्वृतिं भुवि मुकुन्द विन्देमहि ॥ २०

955 श्रियः परिबृढे त्वयि श्रित जनस्य संरक्षके
सदद्भुत गुणोदधाविति समर्पितोऽयं [1]भरः ।
प्रतिक्षणमतः परं प्रथय रङ्गधामादिषु
प्रभुत्वमनुपाधिकं [2]प्रथित हेतिभिर्हेतिभिः ॥ २१

956 कलि प्रणिधि लक्षणैः कलित शाक्य लोकायतैः
तुरुष्क यवनादिभिर्जगति जृम्भमाणं भयम् ।
प्रकृष्ट निजशक्तिभिः प्रसभमायुधैः पञ्चभिः
क्षिति त्रिदश रक्षकैः क्षपय रङ्गनाथ क्षणात् ॥ २२

957 दिति प्रभवदेहभिद् दहन सोम सूर्यात्मकं
तमःप्रमथनं प्रभो समुदितास्त्र बृन्दं स्वतः ।
स्ववृत्ति वश वर्तित त्रिदश वृत्ति चक्रं पुनः
प्रवर्तयतु धाम्नि ते महति धर्म चक्र स्थितिम् ॥ २३

958 मनु प्रभृति मानिते [3]महति रङ्ग धामादिके
दनु प्रभव दारुणैर्दरमुदीर्यमाणं[4] परैः ।
प्रकृष्ट गुणक श्रिया वसुधया च सन्धुक्षितः
प्रयुक्त[5]करुणोदधिः प्रशमय स्वशक्त्या स्वयम् ॥ २४

[1]जनः [2]प्रचितहेतिभिः [3]महितरङ्ग [4]दरमुदीयमानं [5]करुणोदधे

959 भुजंगम विहंगम प्रवर सैन्यनाथाः प्रभो
तथैव कुमुदादयो [1]नगर गोपुर द्वारपाः ।
अचिन्त्य बल विक्रमास्त्वमिव रङ्ग संरक्षकाः
जितं त इति वादिनो जगदनुग्रहे जाग्रतु ॥ २५

960 विधिस्त्रिपुरमर्दनास्त्रिदशपुंगवः पावको
यम प्रभृतयोऽपि यद्विमत रक्षणे न क्षमाः ।
रिरक्षिषति यत्र च प्रतिभयं न किंचित् क्वचित्
स नः प्रतिभटान् प्रभो शमय [2]रङ्गधामादिषु ॥ २६

961 स कैटभ तमो रविर्मधु पराग झञ्झामरुत्
हिरण्य गिरि दारण स्त्रुटित कालनेमि द्रुमः ।
किमत्र बहुना भजद्भव पयोधि मुष्टिंधयः
त्रिविक्रम भवत्क्रमः क्षिपतु मङ्क्षु रङ्गद्विषः ॥ २७

962 यति प्रवर भारती रस भरेण नीतं वयः
प्रफुल्ल पलितं शिरः परमिह क्षमं प्रार्थये ।
निरस्त रिपुसंभवे क्वचन रङ्गमुख्ये विभो
परस्पर हितैषिणां परिसरेषु मां वर्तय ॥ २८

963 प्रबुद्ध गुरु वीक्षण प्रथित वेङ्कटेशोद्भवाम्
इमामभयसिद्धये पठत रङ्गभर्तुः स्तुतिम् ।
भयं त्यजत भद्रमित्यभिदधत् स वः केशवः
स्वयं घन घृणा निधिर्गुणगणेन गोपायति ॥ २९

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

[1]नगरगोपुरद्वारगाः , [2]रङ्गधामादिके

श्रीः

श्रीकुमार वरदाचार्येण कृतं

# श्रीमद्वेदान्तदेशिक मङ्गलाशासनम्

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ।।

श्रीमल्लक्ष्मण योगीन्द्र सिद्धान्त विजयध्वजम् ।
विश्वामित्र कुलोद्भूतं वरदार्यमहं भजे ।।

सर्वतन्त्र स्वतन्त्राय सिंहाय कविवादिनाम् ।
वेदान्ताचार्य वर्याय वेङ्कटेशाय मङ्गलम् ।। १

नभस्यमासि श्रोणायामवतीर्णाय सूरये ।
विश्वामित्रान्वयायास्तु वेङ्कटेशाय मङ्गलम् ।। २

पिता यस्यानन्तसूरिः पुण्डरीकाक्ष यज्वनः ।
पौत्रो [1]यस्तनयस्तोतारम्बायास्तस्य मङ्गलम् ।। ३

वेङ्कटेशावतारोऽयं तद्घण्टांशोऽथवा भवेत् ।
यतीन्द्रांशोऽथवेत्येवं वितर्क्यायास्तु मङ्गलम् ।। ४

श्रीभाष्यकारः पन्थानमात्मना दर्शितं पुनः ।
उद्धर्तुमागतो नूनमित्युक्तायास्तु मङ्गलम् ।। ५

[1]यस्तनयस्तोताद्रचम्बायाः

योो बाल्ये वरदार्यस्य प्राचार्यस्य परां दयाम् ।
अवाप्य वृद्धिं गमितः तस्मै योग्याय मङ्गलम् ॥ ६

रामानुजार्यादात्रेयान्मातुलात् सकलाः कलाः ।
अवाप विंशत्यब्दे यस्तस्मै प्राज्ञाय मङ्गलम् ॥ ७

श्रुतप्रकाशिका भूमौ येनादौ परिरक्षिता ।
प्रवर्तिता च पात्रेषु तस्मै श्रेष्ठाय मङ्गलम् ॥ ८

सांस्कृतीभिर्द्रामिडीभिः वह्वीभिः कृतिभिर्जनान् ।
यस्समुज्जीवयामास तस्मै सेव्याय मङ्गलम् ॥ ९

यः ख्याति लाभ पूजासु विमुखो वैष्णवे जने ।
क्रयणीय दशां प्राप्तः तस्मै भव्याय मङ्गलम् ॥ १०

यस्मादेव मया सर्वं शास्त्रमग्राहि नान्यतः ।
तस्मै वेङ्कटनाथाय मम नाथाय मङ्गलम् ॥ ११

पित्रे ब्रह्मोपदेष्ट्रे मे गुरवे दैवताय च ।
प्राप्याय प्रापकायास्तु वेङ्कटेशाय मङ्गलम् ॥ १२

यः कृतं वरदार्येण वेदान्ताचार्य मङ्गलम् ।
आशास्तेऽनुदिनं सोऽपि भवेन्मङ्गल भाजनम् ॥ १३



सप्तति रत्न मालिका :—

भाद्रपदमासगत विष्णुविमलर्क्षे
वेङ्कटमहीध्रपति तीर्थदिनभूते ।
प्रादुरभवज्जगति दैत्य रिपुघण्टा
हन्त कवितार्किक मृगेन्द्र गुरुमूर्त्या ॥ (श्लो-१०)

सशङ्खचक्रलाञ्छनः सदूर्ध्वपुण्ड्रमण्डितः
सकण्ठलग्नसत्तुलस्यनर्घ पद्ममालिकः ।
सितान्तरीय सूत्तरीय यज्ञसूत्र शोभितः
ममाविरस्तु मानसे गुरुः स वेङ्कटेश्वरः ॥ (श्लो-५९)

अनन्त सूरि सूनवेऽभिनन्द्यमान वैभवाद्
दिगन्त वादिहंस जैत्रकालमेघ देशिकात् ।
उपात्त सर्वशासनाय हन्त वर्ष विंशतौ
पुनःपुनर्नमस्क्रियाऽस्तु वेङ्कटेश सूरये ॥ (श्लो-१७)

कवितार्किक कलभव्रज कबलीकृतिसिंहं
कमलापति करुणारस परिवर्धित बोधम् ।
यतिनायक पदपङ्कज युगली परतन्त्रं
भज मानस बुधवेङ्कटपतिदेशिकमनिशम् ॥ (श्लो-६५)

कलये सततं करुणा जलधिं
करुणा विषयं कमलाधिपतेः ।
कलि वैरि शठारि वचो रसिकं
कवितार्किक केसरि सूरि गुरुम् ॥ (श्लो-२३)

गुरौ वादिहंसाम्बुदाचार्यशिष्ये
जना भक्तिहीना यतीन्द्राप्रियाः स्युः ।
यतीन्द्राप्रिया विष्णु कारुण्यदूराः
कुतो मुक्तिवार्ता हि तादृग्विधानाम् ॥ (श्लो-५५)



वेदे सञ्जात खेदे मुनिजन वचने प्राप्तनित्यावमाने
संकीर्णे सर्ववर्णे सति तदनुगुणे निष्प्रमाणे पुराणे ।
मायावादे समोदे कलिकलुष वशाच्छून्यवादेऽविवादे
धर्मत्राणाय योऽभूत् स जयति भगवान् विष्णु घण्टावतारः ॥



कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

वादिद्विपशिरोभङ्गपञ्चाननपराक्रमः ।
श्रीमान् वेङ्कटनाथार्यः चिरं विजयतां भुवि ॥



* श्रीमते निगमान्तमहादेशिकाय नमः *



श्रीः

## श्रीमन्निगमान्त महादेशिक विरचिताः दिव्यदेश मंगळाशासन श्लोकाः



श्रीमान्वेंकटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

विधिविहितसपर्यां वीतदोषानुषङ्गाम्

स्वयमुपचिनु नित्यं रङ्गधामन् स्वरक्षां
शमितविमतपक्षां शाश्वतीं रङ्गलक्ष्मीम् ॥

—श्री सारसारम्—(श्रीरङ्गम्)

प्रशमितकलिदोषां प्राज्यभोगानुबन्धां
समुदितगुणजातां सम्यगाचारयुक्ताम् ।
श्रितजनबहुमान्यां श्रेयसीं वेङ्कटाद्रौ
श्रियमुपचिनु नित्यं श्रीनिवास त्वमेव ॥

—श्री रहस्यनवनीतम्—(वेङ्कटाद्रिः)

वरद विरचय त्वं वारिताशेषदोषां
पुनरुपचितपुण्यां भूषितां पुण्यकोट्या ।
सितमुदितमनोभिस्तावकैर्नित्यसेव्यां
हतरिपुजनयोगां हस्तिधाम्नस्समृद्धिम् ॥

—श्री तत्वनवनीतम्— (काञ्चीपुरम्)

नवनवबहुभोगां नाथ नारायण त्वं
विरचय दुरितौघैस्तामनाघ्रातगन्धाम् ।
सहजसुलभदास्यैस्सद्भिरभ्यर्थनीयां
यतिपरिबृढहृद्यां यादवाद्रेस्समृद्धिम् ॥

(तिरुनारायणपुरम्)

श्रीरंगाद्विरदवृषाद्रिपूर्वकेषु
स्थानेषु स्थिरविभवा भवत्सपर्या ।
आकल्पं वरद विधूतवैरिपक्षा
भूयस्या भवदनुकम्पयैव भूयात् ॥

–(श्री रहस्यपदवी)



कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेंकटेशाय वेदान्तगुरवे नमः ॥



## * रघुवीरगद्यम् [ महावीरवैभवम् ] *

वाक्य सूची Appendix 3

—**—

श्रीः

## श्रीमद्वेदान्तदेशिक मङ्गलाशासनम्

### —: श्लोक सूची :—





### * मन्त्रप्रतिपादकश्लोकसूची *

—:०:—

| | |
|---|---|
| गरुडमन्त्रः | 34,932 |
| गोपालमन्त्रः | 339 |
| राममन्त्रः | 334 |
| सुदर्शनमन्त्रः | 542 |
| हयग्रीवमन्त्रः | 3 |

—:*:—

